जयगुरुः

# अपूर्णगाथा



लेखक :

**श्री नारायण रथः**

गुडिआसाहि, पुरी

मूल्य— 7-00

## भूमिका मङ्गलं च

सुधामयी रुद्रविधेयवार्त्ता
पुरोदिता प्राकृतगद्यरीत्या
कृताधुनामर्त्यगिराभिरामा
तनोतु मोदं ननु कोविदानाम् । (१)

उदाहृता रुद्रसुधानिधिर्या
वधूतगाथा ममचानुवादे
वैधेयदोषाद् यदिकिञ्चिदूना
निहन्तु न ग्रन्थकृतो यशांसि । (२)

मदीयशिक्षागुरुणा नियोजितः
गुणाभिधाभ्यां किल सत्यवादिना
कुतूहलाद् यत्कृतवानयत्नतः
दिवंगतस्यास्तु सुखाय केवलम् । (३)

अजातधाम्नो यशसे वृथा श्रमः
तथापि तेन प्रणयिप्रसादनम्
कुरुष्वशान्तेष्वपि भूमियाचना
जनार्दनस्यैव तु पार्थतुष्टये । (४)

प्रचोदितो येन हृदिस्थितेन
गद्यानि पद्यानि करोमि मूढः
श्रीसद्गुरोः शोणपदारविन्दे
कृतार्पणं स्याच्च नमोवचांसि । (५)

× × × × ×

अपूर्णां प्राकृतां गाथामवधूतस्यधीमतः
परिशिष्टेन संपूर्णां कृत्वा वच्मि प्रयत्नतः

एतावता भूमिकया सह "अपूर्णगाथा"याः पाण्डुलिपिः आदौ मुद्रणालये प्रदत्तापि अर्द्ध मुद्रणानन्तरं दुरवस्थांगमितेन मुद्राकरेण मह्यं प्रत्यर्पितासीत्। गच्छता कालेन एकदा एकाम्रक्षेत्रसंस्थिते मयि असंपूर्णां मूल "रुद्रसुधानिधि" कथां संपूर्णां वक्तुं वासनाजन्य-कस्मात्। अल्पवुद्धित्वात् अतिसंक्षेपेन कथमपि कृतावसानायामपि कथायां ग्रन्थस्याभिधानं "अपूर्णगाथा" इत्येव रक्षितं प्रथममुद्रणदृष्ट्या। मूलग्रन्थकर्त्तुः गौरवरक्षणाय कन्यारूपवर्णनानन्तरं कथाशेषंयावद्-विषयः परिशिष्टत्वेनावगन्तव्य एव। तस्माद् गुणनचिह्नप्रदानेन विभागः कृतः। मुद्रणदोषा अन्यदोषैः सह क्षन्तव्या एव सज्जनैः। इत्यलम्।

विनीतः
**श्री नारायण रथः**
गुडिआसाहि, पुरी।
ता १८-९-१९९२

जयगुरु

# अपूर्ण गाथा

आसीदेकाम्रवनाश्रित श्रीभुवनेश्वरीदेवी वरपुत्रः, शारदायाः पुरुषावतार इव निर्दोषवाङ्मयः, दिग्गजपण्डितानां विक्रमकेशरीव आगमविद् पण्डितानां सम्मोहक नराकृतिकण्ठीरवः, षट्चक्रभेदन नवधा वश्योकरणाष्टादशविद्यागीता पुराणस्मृतिनाटकस्तम्भनमोहनवश्योच्चाटनाञ्जनपादुकसाधनरसलेपनरसायनोलुककुहुकमारणमन्त्रौषधादिविद्यानिधानः, नारायणानन्दनामावधूतः नवरत्नोज्वलां दीपजडितमणिभास्वरां सुधाकर सुधाशीतलां स्वस्यवाग्विभूतिं जिज्ञासुभ्यः ज्ञापितुकामः पुराणीं शिवशिवानीसम्भूतां कथां अकथयदित्थं सः ।

विश्वेपुपावनभूमिश्रेष्ठश्रीभारतवर्षस्य सुधांशुधवलहिमालयपर्वतोपरि कनकमयमन्दिरशोभिताश्रमपूरितत्रिलोकसारस्वर्गायमाणकपिलासकन्दरोपकण्ठमानससरोवरपुलिने एकदा सूर्य्यास्तकाले रुद्रसिद्धगणानां मध्ये ज्ञानोपदेशं कुर्वाणः कामाङ्गनाशनः शङ्करः क्रीडायां दत्तचित्तः शैलेन्द्रपुत्र्या शोभमान आसीत् । तदानीं परमेश्वरस्य परं ज्योतिरिव पूर्णानन्दस्यपारंगतं खण्डेदुमौलिं अन्तरीकृत्य देवा अपि आसन् । तेषां गणानां मध्ये महादेवः शुक्लशरदभ्राणां उद्घे मङ्गलमुहूर्ते रोहिण्यासह विहरमाणः सम्पूर्णकलाभिः रमणीयः पूर्णचन्द्र इव बभौ । शुद्धान्तकरणास्ते सिद्धाश्च चतन्योद्भासिताः वद्धपद्मासनाः निर्मलमनसः निश्चलनयनाः विषयशून्याः श्रवणनयनमनोभिरपिशुश्रूषवः चिन्मयानन्दमनुभवन्तः प्राणेन्द्रियमनोगुणातीतभूमौ निर्विकल्पंयतमानाः नारायण पदारविन्दं स्मरन्ति स्म । अपरेऽपि परात्मनिष्ठिताः

निरालम्बब्रह्मतत्वं ध्यायमानाः ज्ञानानन्दयुक्ताः जीवन्मुक्ताः द्वन्द्वातीताः विवेकिनः त्रिलोचनं परितः वर्त्तमानाः इन्द्रियनिरोधेन मनोलयं कृतवन्तः।

मदिरान्धजनस्य वस्त्रमिव स्थितान् तान् अमृतमयनयनाभ्यां निरीक्ष्य अन्तर्गतमनसा तेषां ज्ञानबुद्धिदोषसमाधिसिद्धसीमापरिकलनचिकीर्षुः विस्मृतबहिर्बुद्धिः देवेन्द्रमुकुटमणिः जगत्प्रभुः पुरारिः पार्वतीसाय कौतुकेन परिहसन् कर्णमूले कोमलं कथयामास यत् हे भद्रे ! हे कल्याणि। शुभ्र सुकुमारि ! शाकम्भरि ! बाह्याभ्यान्तरपञ्चविंशतितत्त्वमयीप्रकृतिरूपिण्या जगन्मोहिन्या दूरत्यया मायया त्वया जगदिदं सम्मोहितं। पुरः-स्थितानामिदानीमहमेतेषां बुद्धिगुणदोषं तावत् ज्ञातुकामः भवामि। अतः हे देवि ! मद्वचनात् त्वं प्रसन्नमनसा त्रिलोचनमोहनक्षमां कन्यामेका-मुत्पादय त्वं तु स्वभावतः परमा मायासि। तवैव लावण्यमयकारा श्रयणादेव कन्दर्पः पुरा मामपि जितवान्। अधुना पुराणमपि तच्छक्ति-प्रयोग सामर्थ्यं भूयोऽहं द्रष्टुं कामये। अतः आत्मलीलाखेलाप्रसङ्गतः नारी भूत्वा चराचरमोहिनीतनयायाः जनयित्री भव यत्सहायः वसन्तसखः कामदेवः कुसुमधनुषा कार्य्यं साधयिष्यतीति। शङ्करे एवं कथयति सति चिन्मयी सापि परमाशक्तिः पाशमुक्तानामपि सिद्धानां अनङ्गपाशाकर्षणाय कौतूहलिनी सती मुहूर्त्तध्यानतः स्वमनसः कन्यां जनयामास विश्वमोहिन्या यया निखिलं जगत् प्राणिभिः सह क्षोभितं बभूव।

अनङ्गकार्मुकायमाणा बृहस्पतिब्रह्मेश्वरादियोगेश्वराणामपि विवेक-मोहपाशायमाना कामिनीकुलकमलकमलायमाना मनसिजविलासरत्न-चन्द्रायमाणा पूर्णनिर्मलशरच्चन्द्रवदना हासपूरितनयना मुनिमनोनयनानां तिमिरायमाणा ज्ञानतरुनिर्मूलनगङ्गातरङ्गायमाणा, स्निग्धविदग्धमधुर चञ्चलकटाक्षेसुकोटिकन्दर्पनिलया सा कन्यका तेजसा आभूमेः कपिलास-

कन्दर्पं परिभूय कान्त्या क्षणप्रभां तिरस्कृत्य मुखकमलसौरभेन योगिने निर्वाणसुखं, स्तनशोभया शम्भवे तुरीयपदगौरवं, जडीभूताय विधात्रे प्रलापं, कुक्कुटात् जीवितं धारयते चन्द्राय रोहिण्या सङ्गविलुप्तया नभसिप्रकाशाद् गुभिरपि स्पर्शसुखालाभात् कलंकं, मन्मथाय रतिविलास परिहारसंकल्पमपि ददतीव बभूव।

सिद्धानां महर्षिणां च चित्तविभ्रमाय कामप्रलोभनाय च यस्याः सकलनारीशोभाङ्गीकृतायाः भगवता सम्भवः विहितः, यत्कायकान्तिल स्यालोकनं निवारयितुं लक्ष्मीरपि नारायणनेत्रद्वयं परिहासमिषेन निमीलितवती यस्याः नितम्बबिम्बे कन्दर्पप्रतिबिम्बं पद्मबन्धुम याकर्षयतितदङ्घ्रिपद्मे कुबेरपदनिधेः आकर्षग्रहणं न चित्रम्, क्रीडारसतटिनीव अनुपमामोदसन्दीपनी सा कन्या लावण्यवारिणा दिगन्तं प्लावयामास येन प्रवाहेन ससिद्धदिक्पालाः चराचरेणसह जडीभूताः स जाताः। रत्नैरलंकृतायाः तस्या आविर्भावात् प्रहृष्टः मनसिजः महापुरुषाणामपि चित्तक्षोभाय वसन्तेन सह सपुष्पबाणः तत्र समागतः तत्सहायार्थं चन्द्रमामधुयामिनी मलयपवना अपि तत्र रम्यवने सहसा दृष्टाः येन सकलवन्यजन्तवः कामपीडिताः बभूवुः। किं बहुना तत्र तदानीं विहरन्त्यः विद्याधर रमण्यः भर्त्तारं कामयमानाः संजाताः शुष्कतरवोऽपि पल्लविताः मैथुनलोलानां महागजानां भारंमपि दुर्बलकरिण्यः कथञ्चिदपि सोढुं उन्मादादेव शक्नुवत्यः। पद्मसौरभलोलाः षट्पदाः सत्वरं कोशनिबद्धाः। अकालेऽपि कोकिलस्वर सारिकानिःस्वनाश्च श्रुताः, दिवा यामास्तनतटसंकटमपि मलयपवनः आश्रितवान् सकलपुरुषाश्च अङ्गनाभुजपञ्जरबद्धाः बभूवुः। एवं तस्मिन् क्रीडारण्ये जीवाजीवेषु कामान्धकारपतितेषु सत्सु मन्मथेन धनुषि युगपत् पञ्चबाणान् आकर्णमाकृष्य मनसि इत्थं विचारितं

यत् अद्यैव तावन् पश्यामि कथं सिद्धानां वैराग्याभिमानं येन, पुरा शिवेनानंगीभूतं मत्वा ममावहेलनया ते महर्षयः श्रद्धया विष्णुभक्तिमाश्रित्य तत् प्रसादेन नित्यानित्यविवेकेन यमनियमादिभिः शुद्धकरणाः सन्तः अणिमादिसिद्धिकुलं कुहुकं, स्त्रीरत्नं नरकस्य द्वारं प्रपञ्चमपि जगत् प्रपञ्च मिथ्या विचिन्त्य मामपि तिरस्कृतवन्तः। इत्थं पूर्वकथा स्मरणकुपितः मकरध्वजः वैरप्रतिमोचनाय दुरन्तप्रतिज्ञया अपांगचाञ्चल्येन एव सिद्धान् विकलीकर्त्तुं मायाकन्याप्रसादेन प्राचीनवरिणः स्थावरस्थाणोरपि पराजयाय च मनसि निश्चयं कृतवान्। अस्मिन्नेवसमये चन्द्रज्योत्स्नासु दिगन्तेविस्तृतीभूतेषु परिपुष्टेषु च कामभावेषु तस्यां त्रैलोक्यमोहिन्यां कन्यायां समाधिभङ्गाय सिद्धमण्डलेषु मिलितायां सत्यां तेषां रुद्रसिद्धगणानां स्थिरमनोविहंगानामुपरि मन्मथेन जालो निक्षिप्तः। फलेन धैर्य्यपर्वतः लावण्यवारिभिः निमज्जितः, कैवल्यपरमानन्दः अणिमाद्यविद्यया समाच्छन्नः, बोधचन्द्रोदयः मोहमेघमालाभिरदृश्यः, निवृत्तिशान्तिरसकमलवने वसन्तवातप्रकोपात् ब्रह्मनिष्ठबुद्धिः स्त्रीसंगलोला योगाभ्यासवह्निरपि अधरामृतधाराभिः निर्वापितश्च। एवं समाधिभंगे सति तेऽपि सिद्धाः तुरीयपदात् जाग्रतमवतीर्य्य चक्षुषि मन्मथमालोक्य विषयसुखाय लोलाः बभूवुः। तत् दृष्ट्वा ईश्वरोऽपि चमत्कृतमत्या पार्वतीमालिंग्य वक्तुमारब्धवानित्थं यत् हे सखि' मृतायाप्यनंगाय कथं जीवन्यासेन नवतनुः प्रदत्ता त्वया येन मन्मनोऽपि संक्षुभितः। इदानीमेव सिद्धानां बलं परीक्षणीयमेव।

इति वादिनि चन्द्रमौलौ अदृष्टपूर्वाद्भुतमोहिनीकन्यां अर्द्धोन्मीलितलोचनेनापि विलोक्य विस्मितानां सिद्धरुद्रगाभनां मध्ये समाधिभंगाद् भयेनोद्विग्नचित्तत्वात् महान् विपर्य्ययः अभूत्। समयं प्रतिकूलमालोक्य

केचिन्निरा स्वध्यानेन शब्दचिन्तनेन गगनगमनेन, विष्णोरभयपदाश्रयेण, परमज्योतिःषु परमचिदानन्देषु निर्गुणेषु अजीवभावेषु विषयशून्येषु निर्विकल्पेषु निलीयमानाः अन्तर्भूताः अवधूतायमानाः बभूवुः। इतरे च अशरीरिणः ज्ञाने इव कन्याशरीरं प्रविश्य सीमन्तिनीस्वरूपज्ञानलाभात् तां नटिनीं बहुरूपिणीं शुक्तौरजतरज्जौसर्पन्यायेन इन्द्रजालमयीं मृगतृष्णाशशविषाणोपमां अपि च सर्वमयीशक्तिस्वरूपां मत्वा नित्यानित्यविचारेण मनोबुद्धिचैतन्यैः सह शब्दभूमिं विश्वतैजसप्राज्ञलक्षणां अतिक्रम्य महाप्रलयेऽव्यबाधितेऽखण्डेतुरीयात्मनि रममाणाः सन्तः तापत्रयनाशनब्रह्मज्ञानप्रसादेन स्वरूपमाजग्मुः केवलं अभिनवचैतन्याभिधं गणानामन्यतमं विहाय यः योगमारुरुक्षुरपि कन्यारूपं विलोक्य सहसानङ्गतप्तोऽभवत्। अचलमपि तस्य चित्तं चलितं, स्थिरचक्षुः स्खलितं, हृदयं गलितं, चैतन्यः मज्जितः, शरीरं कम्पितं, रोम पुलकितं, कामः स्फुरितः श्वासः त्वरितः, बुद्धिः विमूढा सन्यासः निर्वासितः, स्वेदबिन्दुः पतितः, गण्डस्थलं उल्लसितं, भ्रूलता चञ्चला, श्रृङ्गाररसो वर्द्धितः, ज्ञानमुद्रा शिथिलीकृता, समाधिः दूरीभूता च आसन्। एवं योगाभ्यासे वर्जिते सति विकारखेदावपादरतिरङ्गस्मरण कन्यारसरञ्जनानेताभोगवाञ्छाप्रावरणात् भवसागरे भासमानस्य तस्य खेचरीस्थानच्यावनं, रोमद्गमं रसजलधिमज्जनं जानुकम्पनं नाभिसंकोचनं विलोक्य सा मायाकन्यापि लज्जया मन्दमन्दं जहास स्वजन्मसार्थकतां पार्वतीममसिद्धिं च विचिन्त्य विजयिनः मीनकेतनस्य बाणैरापीडितः अभिनवचैतन्यो नाम सिद्धः पाशावद्धनिश्चलकुरङ्ग इवा बभवत्। तस्य अधोगतं मनोऽपि छिन्नबन्धनमातङ्ग इव लावण्यपंके निमग्नमासीत्। ततः साधन परम्परा विस्मृता, बुद्धिरनङ्गरञ्जिता नित्यानित्यवस्तुविचारः स्तनसंकटासन्नः, इलायां वायुः प्रवाहितः, लज्जाधैर्यशान्त्यानन्दहासाश्च संजाताः।

एवं भावजलधिप्लावनात् मन्मथावर्त्तगतस्य ज्ञानबुद्धिविरहितस्य अपाङ्गपीड़ितस्य इन्द्रियपाशबद्धस्य विरुद्धभेदखेदद्वन्दस्य उज्भितपद्मासनस्य स्विन्नकम्पिताधरस्य जृम्भणादिलक्षणचिह्निताङ्गस्य जड़ीभूतचक्षुषः इदृशीमवस्थां लोकयन् करुणार्द्रः ईश्वरस्तमाह हे वत्स अभिनवचैतन्य अपूर्णा ते भोगासक्तिः। तत्र चिन्ता मा कार्य्या। पुरा मनसिजेन अहमपि मुग्धोऽभवम् का कथा इतरेषां। अतः संप्रति त्वं महीं गत्वा महाराजकुलप्रसूतः समुद्रान्तां पृथिवीं प्राप्य योगभ्रंशफलरूपेण कन्यामेनां भुंक्ष्व यतः मर्त्त्ये शरीरग्रहणं विना अन्यथेद न सम्भवति। योगभ्रष्टः नृपतिः योगी वा भवति। अतस्त्वं अनङ्गपद्माकरनृपतेः शशिप्रभानाममहिष्युदरे जन्मयातनां सहस्व।

इत्थममोघमीश्वरवचनश्रवणेन सहसोत्पन्नचैतन्यः सोऽभिनवचैतन्यः गर्भनरकयन्त्रणास्मरणेन भयेन कम्पितकलेवरः ध्वस्तकामान्धकारोऽद्भुतः चिन्ताकुलविवर्णवदनः स्खलितवचसा व्याकुलतया तरुणेन्दुशेखरं युक्तकरेण भूमौ निपत्य कातरमेवमुवाच प्रभो देवेश्वर! भवत्पादपद्माश्रितस्यापि मे कथं नरकपतनं सम्भवेत्! अमोघवाक्यस्य तवाज्ञया अवश्यं मे जन्मदुःखादिकं सोढ़ यं। भवान् सर्वज्ञः सर्वेश्वरः आप्तकामः सर्वमयः सर्वरूपः सर्वद्रष्टा सर्वात्मा सर्वहर्त्ता सर्वकर्त्ता सर्वसाक्षिरूपः सर्वजीवजीवनव्यापकः सर्वान्तर्यामी एव जनन्याः जठरे मलमूत्रामेध्यमयनाड़ीचर्मगह्वरे कमठायमानोऽहं कृमिदष्टः त्रिदोषदुष्टः त्रितापतप्तः नरकयन्त्रणां कथं वा सहिष्ये न जाने। प्रसवावसरे नरकनाले पूतिगन्धरुधिरमये वायुताडनेन बहिर्गतः, जीवद्दशायामपि व्याधिशोकमोहयोगवियोगपीड़ितः महासर्पः विवरं प्रविष्ट इव तमोमयसंसारकूपे पतिष्यामि। कोऽहं कोऽहं ब्रुवाणः आत्मस्वरूपं विस्मृत्य स्तनलालपानेच्छुः मलमलिनीकृतवपुषा जाग्रत्स्वप्न-

मुग्धत्याभिलीनः अज्ञानसमुद्रे मज्जितो भवामि। सदाशिव! मम ईश्वरभावं नाशयन् जीवं करोषि। अहो प्रभुहृदयं आद्यमध्यान्तं कठोरमेवेति तर्कये। अनन्तरं कुमारत्रयत्वकारणं शिशूनांरङ्गक्रीडारसाविष्टशरीरः विद्याभ्यास-गुरुजनभयकातरः क्रमात् यौवनं गतः अहंकृत् त्रितापक्लिष्टः परतः मनसः शोकमोहाभ्यां, प्राणानां क्षुत्पिपासाभ्यां, देहस्य जरामृत्युभ्यां स्थावर इव कम्पितः भविष्यामि तदानीं विषयलालसां, शान्तिधैर्यहानि स्नेहतृष्णा-शाक्षोभव्याधि वृद्धि, चिन्तामोहाविद्याविभ्रमप्राबल्य देहात्मबुद्धि च प्राप्य मुक्तिपथात् प्रभ्रष्टः मोहाद् विविधान्नव्यञ्जनोपधानि अमृतं मन्यमानः ऋतुचर्यया मैथुनलोलः अस्थिमांसनिर्मितनारीणामधरलालमपि अमृतं विचिन्त्य रक्तपूर्णचर्मपात्रमिव स्तनं पिबन् बुद्बुदचञ्चलानङ्गक्षुब्धः महा-मोहात् चुम्बदानेन अमेध्यपूतिदुर्गन्धरुधिरमयपथे कामिरेव सन्तरन् स्त्रीरमणं कुर्वाणः चर्मावरणं श्वानशृगालश्वापदगृध्रकाकमशकमक्षिकोपभोग्यं रोग-भुक्तं सर्वापत्तिनिलयं निरन्तरमदनपीडितं नवद्वारेणनरकं स्रावयन्तमपि पुष्टशरीरं सर्वस्वं मन्यमानः काले जरां प्रवेक्ष्यामि। क्रमशः विशान्त्यां जरायां भ्रमरकालिमानमपि तिरस्कुर्वाणः केशपाशः यमराजश्वेतचामरवर्णं, नीलोत्पलनिन्दिचक्षुः विकृतमर्कटनयनत्वं, सुवर्णवर्णदेहकान्तिः शुष्कलोल-पाण्डरत्वं, विक्रमसिंहस्येवमेरुदण्डोऽपि वक्रत्वं यास्यति। मुखात् लालं स्रावयन् कङ्कालमालशोभितवक्षस्थलः निमग्ननयनः गलितचर्मा अधोकृत-मुखः, कम्पितकलेवरः, धृतयष्टिदण्डः क्षीणेन्द्रियः सामान्यभोजनेनापि पीडितः तरुणी तरुणानां हास्यतां यास्यामीति जरादुःखं कथं वर्णयामि प्रभो! निशाकालेऽपि मणिमालगुम्फनपटुनयनं दिवापि स्वतःप्रभं न पश्यति। न कोऽपि पृच्छति स्थविरं। तारुण्ये अहर्निशं चिन्त्यमाना प्रणयिन्यपि नाम-स्मरणेन विषमिव प्रतिभाति जरायां। सर्वेऽपि बुद्धिशुद्धिदानध्यानधैर्य-शौर्याचारविचारशान्तिकान्तिलज्जास्वरोत्साहधर्मकर्मादिसद्गुणाः तिरो-

हिता भवन्ति। जीवानां बाल्यं अज्ञानेन, तारुण्यं वनितासक्त्या, वार्द्धक्यं व्याधिना कर्षितमपि जीवः कोपकारीकृमिरिव निश्छिन्नस्वपाशेनवद्धः स्मृतिं यास्यति। अनुदिनं प्रातः मलमूत्रमोचनेन, मध्याह्ने क्षुत्पिपासाभिः, सन्ध्यायां मदनोन्मादेन नयतः रात्रौ च शववत् निद्रागतस्य जीवस्य कथं तावत् परमात्मसान्निध्यावकाशः।

एवं वदतोऽभिनवचैतन्यस्य मरणदुःखे स्मृतिपथारूढे सति भूमौ पतनात् मूर्च्छा संघटिता। क्षणात् चेतनामासाद्य पुनरपि शिवं प्रणम्य साश्रुनयनं स्विन्नकपोलं सकामभर्त्सनं मरणदुःखं गद्गदयागिरा वक्तुमारब्धवान्। परमेश्वर एवं जन्मजरादिग्रस्तवन्धनात् मोक्षः कथं वा सम्भवति संसारिणः मृत्योः पूर्वं कियद्दिवसेषु प्रायः निद्राभावात् केवलं जागरणं, वचनस्खलनं, चेतोभ्रंशः, प्रकृतेःवैपरीत्यं, विवर्णनयनत्वं, त्रासप्रलाप श्वासमोहादिकं च दृश्यन्ते। परिपाकवैषम्यात् नाभिमण्डलात् व्याधयः प्रभवन्ति। कफप्राबल्यात् भीतः अग्निः मनोपवनाभ्यां सह सुषुम्नामनुयाति। कण्ठावरोधनात् उर्द्धश्वासात् हृत्पद्मावरुद्धः व्यानवायुः उद्घूर्णं प्रचलति। शरीरव्यापिना-जलेन प्राणास्ताडिताः म्रियमाणं इव क्रन्दन्ति दुर्दिनात् वहुः... कथयति। प्रलयानले प्राणवायुः हुते सति धातुशोषणं, दुःखयादानं, स्कन्ध-निगलनं, कण्ठद्वारे कपाटपाटनं, स्वेदनिर्गमनं इन्द्रियभ्रंशः हंस कोटरात् जलनिष्कासनं, भ्रमरगह्वरात् पलायितोऽपि न त्रिवेण्यां विकरालं ज्वलति, श्रीहट्टग्रामात् पलायमानं जीवनं अन्तर्लीनतया कण्ठमाश्रित्य सहसा निर्गतं भवति। तदा जनं मृतमिति कथयन्ति लोकाः यातना शरीरं कृतान्तदूतकर्षितं प्राप्य कर्मानुयायीभोगानन्तरं पुनः नूतनयोनिं प्रविशति जीवः। पुनरपि जननं पुनरपि मरणं जननीजठरे शयनं एवं जन्मजरामरणचक्रेण भ्रामितस्य जीवनस्य त्रिगुणवद्धस्य रिपुग्रस्तस्य

पुनः पुनः मोहमापन्नस्य कथं निष्कृतिः संसारस्मात् ? प्रभो ! भवदाश्रितस्यापि मे यदीदृशी गतिः स्यात् तन्नयुक्तम् ।

शिवाय नमः । शिव शिव शिव कुन्दकुमुदकुरङ्गधर कर्पूरकरकाधवल कम्बुकण्ठ कोकनदमालाभरण करकलितब्रह्मकपाल काकोदरकङ्कण कुरङ्ग चर्मवसन कालानलनयन कर्णक्वणभुजङ्गकृतमकरकुण्डल कलानिधिधर कलाप्रवण कालिकासेवितचरण कालान्तकरूप कपिलानन कपिलासकन्दर-निवसन कामाङ्गनाशन कैवल्यस्वरूप कैवल्यवरप्रद कुधरनन्दिनी कुचकलस-परिरम्भचतुर हे शङ्कर मयि प्रसीद । इत्युक्त्वा सोऽभिनवचैतन्यः लोकमङ्गलं लोकहितायैव चिरातपोयोगपथमास्थितं सन्धाभ्ररुचा अङ्गेन तापसचिह्नं चन्द्रलेखां च शिरसि बिभ्रन्तं तं महेश्वरं पुनः पुनः प्रणामं अकोरत् । एवं भक्त्या प्रसन्नः विश्वसुहृत् स सनातनपुरुषः तमित्थं कृपयोवाच—पुत्रक ! मा भैः । अनङ्गपद्माकरो नाम नृपतिः पुत्राय यतमानः तपसि । दीर्घकालं यावत् सपत्नीकं तेन मौनकृच्छ्रचान्द्रायणशीतातपसहनमन्मथदहन-पञ्चाग्निसेवनदूर्वाबिल्वभक्षणद्विजाराधनतीर्थाटनवृक्षादिरोपणमण्डप-देवालयादिनिर्माणातिथिसेवागोग्रासदानतुलापुरुषान्नवस्त्रालङ्कारहय-कुञ्जरगृहतिलकाञ्चनदधिशङ्खार्पणविधिना सहस्रकन्यापरिणयसुवर्ण शालग्रामप्रदानैः यज्ञनिरतेन अद्यैव पूर्णाहुतिः क्रियते । मदाराधनारम्भ दिवसात् तत्कार्यसिद्धिः सूचितापि त्वत्सदृशजनस्याभावात् तदिच्छां न दत्तवानहमिदानीं यावत् । स एव ते पितृत्वं अर्हति यतः स राजा धीर-धार्मिकाचारवान् सुन्दरगुणगम्भीराक्रूरसत्यक्षमामयदातावैष्णवतत्वज्ञव्रत-निष्ठपवित्ररसिको वर्त्तते । अतः कालविलम्बमकृत्वा तस्य महिष्याः शशि-प्रभायाः गर्भे दिनानि दुःखं सहस्व । मायाकन्यापि धर्मध्वजधुरणीपतेः दुहिता भवतु इति । एवं कथयति महेश्वरे तत्पुरुषः पार्वतीं प्रणम्य

तारकथा योगक्रियामाश्रित्य शशिप्रभायाः गर्भं प्राविशत् । तदा पत्युः भुजपञ्जरबन्धने निद्रिता शशिप्रभा तत्क्षणादुत्थाय स्वप्ने पुरुषगर्भप्रवेश-वृत्तान्तं वर्णितवती ।

अथ प्रभातं गतायां रजन्यां प्राचीदिगङ्गना शिशिरमुक्ताहारेण रागवती बभूव । दीपावलीपाण्डुरान्धकारस्य कुहरप्रवेशः, नायिकानां स्तनोत्तापभङ्गः, गगनं विरलतारकं, कैरव रममाणाः भ्रमरा पद्मिनीलनाश्च लक्षिताः । कौशिकपिशाचाः अन्धकारं कामार्तारमण्यः चौराश्च विषादं. योगिनः साधनं आविष्टाः । कुक्कुटा उड्डीयमानाः दृष्टाः क्वचिदपि । गोपालाः गोभिः गोष्ठं, शिशवः पुस्तकैः विद्यालयं अभिसारिकाश्च स्वमन्दिरं याताः । शिखरिशिरसि प्रस्तराः दृश्यमानाः । दत्तावधिपान्थकान्तापि देहल्यां दिवसगणनया रेखां च दत्तवती । नित्यकृत्यान्ते भर्त्रा आहूतानां वृद्धपण्डितानां तपोविद्यावयोज्ञानाचारसंयमसत्यविचारवृद्धानां यज्ञो-पवीतभस्मकुशमुद्रिकारुद्राक्षशोभितानां समस्यासाधनसमर्थानां शास्त्रपारं-गतानां च पुरतः शरच्चन्द्रवदना नीलोत्पलनयना मत्तगजेन्द्रगमना पीनस्तनी वरवर्णिनी सुलक्षणा नितम्बिनी कामाग्निसन्दीपनी पीतकौशेयवासिन्यपि मनोहारिणी सा राज्ञी अन्तरालादेव प्रणम्य स्वप्नवृत्तान्तं इत्थं कथितु-मारब्धवती यत् अरुणोदयकाले मन्दनिद्रावसरे प्रकृतिस्थाया अपि गर्भे अद्भुततेजोमयः शुद्धस्फटिकसंकाशः कालिन्दितरंगनीलकुटिलजटामण्डितः रक्तकुमुदनयनः सर्पहारः भस्मभूषः चर्मवसनः वृक्षस्कन्धः विशालाक्षः ज्ञानदीप्तः कश्चित् पुरुषः प्राविशत् इति । तच्छ्रुत्वा स्वप्नशकुनसिद्धान्तान् आश्रित्य ते पण्डिताः कथयामासुः राजन् ! त्वया रोपितधर्मतरौ अद्य फलोदयः संजातः । योगभ्रष्टः कश्चिन्महापुरुषः राज्ञाः गर्भे वर्त्तते । गुणवान् कीर्त्तिमान् पुत्रस्ते भविष्यतीति । दानदक्षिणादृतेषु तेषु निष्क्रान्तेषु स राजा पुनरपि ब्राह्मणेभ्यः भूरिधनवितरणात् मुदितः बभूव ।

काले शशिप्रभायाः गर्भलक्षणे प्रत्यक्षीभूते तस्याः मुखं पर्युषित-नलिनीव, शरीरं विवर्णं, उदरं वर्धितं भृङ्गदलितपद्ममिव कृष्णवर्णं स्तनाग्रं, वलयं भ्रष्टं, मेखला प्रशस्ता, अधरे रक्तहानिः, कलेवरं च। भस्माङ्कृतवधूलिरूपमिव बभूव।

गर्भगतः स रुद्रानुचरोऽपि वासुदेवं ध्यायमानः वृद्धिमगमत् येन भारवती सा महिषी व्याकुलाभवत्। तद्दर्शनात् विषण्णः स राजा मनसा सहस्रशीर्षं-विष्णुं विधिना पुरुषसूक्तेन यजमानः एवमाकाशवचनं श्रुतवान् यत् आगमिष्यतः अवधूतस्य दर्शनेनैव शशिप्रभायाः सुस्थता भविष्यति। अहमेव ते पुत्रो भवामि।

अथैकदा भस्मभूषितजटामण्डितः पिङ्गलाक्षः उन्मत्तः कश्चिदवधूतः तस्मिन्नगरे लोकैः दृष्टः यः कण्ठे मृतसर्पोपवीतः मृत्कुम्भमुखहारः शिरसि अन्नभाण्डं च वहति स्म। दत्तान्नमर्पयन्तं भूपतितान्नं तु भुञ्जानं मौनेन सिंहगत्या गच्छन्तं राजा प्रासादात् दृष्ट्वा हर्षात् ननाम। विनयेन तमन्तःपुरं नीत्वा गर्भकष्टं कथयन् राज्ञीं दर्शयामास। ततः अवधूतोऽवदत् अधुनैव कथयामि कोऽयं योगभ्रष्टः गर्भगतः इति। अनन्तरं सुप्तायां महिष्यां योगबलेन तत् शरीरे प्रविश्य स गर्भं महात्मन् इति त्रिकृत्वः आहूतवान्। मनुष्यस्वरं विज्ञाय गर्भस्थशिशुरचिन्तयत् अहो विष्णुमायया मोहितोऽहं भवामि। मत्प्रभुः स्वयं शङ्करः मत्प्रबोधनाय अत्रागतो वा। एवं चिन्तयन्नुवाच तं को मां महात्मन् इति सम्बोधयति ? महात्मनामीदृशी गर्भयन्त्रणा न भवति। कथमहं महात्मापदवाच्यः भवामि गर्भयन्त्रणामनुभूयापि। एवं श्रुत्वा विस्मितः सोऽवधूतः मनसि विचारितवान् यत् नूनमयं योगभ्रष्ट-पुरुषः। अन्यथा कथमीदृशी ज्ञानमयोक्तिः।

पुण्यसमयो मे समागतः दिष्ट्या वहुज्ञानलाभः भवेत्। वृद्धो भ्रूणः कथमेवं कथितुं वा शक्नोति ? तत उवाच। किं भवान् मुक्तजीवः शिवो वा न जाने। अहं तावत् अवधूत एव। अधुना त्वां प्रसादयिष्यामि। जननीं मा सन्तापय तप्ततेजांसि संहृत्य शीतलो भव। जाते त्वस्मि शिष्यं करिष्यामि। वरमपि मत्तः गृहाण। ततः गर्भोऽप्यचिन्तयत् नायं शङ्करः। अल्पवुद्धिः एषः खलुः। नोचेत् कथमहङ्कारः। हठयोगाभ्यासेन शारीरसिद्धिरेव कृतानेन। देहाभिमानं वर्त्तते एवास्य। अस्य गतिमतिस्थितिकर्मचेष्टादिकं दृष्ट्वा ज्ञास्यामि तावत्। इति स्थिरीकृत्य सोऽभिनवचैतन्यः अवधूतं पृष्टवान् क्वासि त्वं पुरुषः ? किमत्र पश्यसि ? किं विचारयसि ? कुत्र ते विश्रान्तिः ? इतिपृष्टः अवधूत उवाच—

विचित्रमाभातं जगदिदं वस्तुमिव दृश्यते मे यत्राहमस्मि।

गर्भः—किं नामवस्तु जगत् ? कथं वा दृश्यते ?

अवधूतः—अधःविस्तृतेयं वहुवर्णा पृथिवी ससूर्य्यचन्द्रतारासागर दिवारात्रिमासतुर्सम्वत्सरविद्युत्वर्षाकाशाशेषप्राणिभिः सह जगत् इति कथ्यते यत्र वा इमे शरीरिणः जाग्रत्स्वप्नसुषुप्त्यादिकमनुभूय वर्त्तमानाः।

गर्भः—किं तावत् शरीरं ?

अव—नवद्वारयुक्तं चतुर्विंशति तत्वयुक्तं सेन्द्रियमायतनं शरीरं यत्र नासिकाद्वारि पवनः संचरति यस्याभावे शरीरं मृतं भवति।

गर्भः—मरणं किम् ?

अव—एतावत्तु न जानेऽहं। परन्तु मृतौ पच्यमानं शरीरं पृथिव्यामेव विलीयते। न भूयो दृश्यते। किन्तु स्वकर्मणा पुनर्देहाप्तिरिति शास्त्रं कथयति।

गर्भः—नेत्थं विकारा आत्मनः । एतद्‌विद्याप्रपञ्चं स्वप्नमेव ते । वस्तुतस्तु किञ्चिदपि न भवति । एकैव चिन्मयसत्तावर्त्ततेऽत्र न द्वितीया । पञ्चभूतसंयोगात् इन्द्रियज्ञानं । कल्पनाबीजात् स्वप्नं प्रभवति ।

अव—यद्येवं न तर्हि कथय त्वं किं जानासि ? किं पश्यसि ? दिवा-रात्रं कथमाभातं ? मातुः स्वप्नजागरणं कथं वेत्सि ?

गर्भः—जगत् अजगत् अहं न जाने । अव्यक्तात् ध्वनिः ततः शब्दः । मातृकुक्षौ अहमुत्तानशायी । अत्र पवने क्षिप्रं चलिते मातुः निद्रामवैमि । अत्रशीतोष्णादिदुःखानुभवः भवति जीवस्य । मातुः कर्णनासिकाद्वारे आलोके प्रविशति सति भवत् कथितां दिवा जनासि । वस्तुतः जगत् स्वप्न-मिवासिव दर्पणे पर्वत इव मायामयं यतोऽहं विभीतः । सूक्ष्मं वटबीजं यथा वृक्षे परिणमति तथा परमाणवः जगद्रूपेण प्रतिभान्ति यथा जलेषु तरङ्गोत्पत्तिः । आत्मनि माया रूपमयी दृश्यते । अज्ञानादेव जन्ममृत्यू । गर्भनिष्क्रामणानन्तरं यथा मे मोहो न भवेत् तदुपायं कथय जानासि चेत् ।

अव—कुण्डलिनीशक्तिजागरणात् चैतन्यप्रकाशः प्रसुप्तायां तस्यां अज्ञानोद्भवः । अयि गर्भपुरुष ! ब्रूहि मां कुत्र सुखं वर्त्तते ? मन्वादिधर्म-शास्त्रं मीमांसाशास्त्रमपि कर्मणा श्रेय इति कथयन्ति । अहङ्कार एवपः । सांख्ययोगौ ईश्वरे गुरुत्वमारोपयतः । यस्तु कैलासालयः तपासक्तः भिक्षान्नैः जीवन् दुःखमाप्नोतीति मन्ये । कौमारकाः ब्रह्माण्डं विष्णुस्वरूपं विचिन्त-यन्ति यस्य चरणं पातालं, कुक्षिः समुद्राः, वड़वाग्निः जठराग्निः, अन्तरीक्षं शरीरं, उर्द्ध्वलोकः मुकुटः, चन्द्रसूर्य्यौ नेत्रे, पवनः निःश्वासः, धर्मः श्रुतिः, यमो जिह्वा, चेष्टा महामाया । अनेनात्मना परमेश्वरेण विश्वं कल्पित

पाशुपताः जगत् शिवशक्तिमयं कथयन्ति । एवं न्यायबौद्धजैनकापालिक-लौकिकवृद्धव्यवहारशाक्तवेदान्ताः स्व स्व मतं प्रतिपादयन्ति एव। देवाः स्वर्गात् च्यवन्ते। ब्रह्मा स्वकार्य्ये विभ्रान्तः। ऋषयः ग्रन्थकर्त्तारः केवलं वत्स कथय कुत्र परमाशान्तिः परानन्दश्च।

गर्भः—अयं दुःखी एव। सुखं न जानाति! अवधूत! यन्मां पृच्छसि तत् तत्त्वविदः विदन्ति। अन्तःकरणशुद्ध्यां वासुदेवभक्ति विना ज्ञानं वा सुखं न भवति। आत्मज्ञानादेव आनन्दः यद्पदं देवाः स्पृहयन्त्येव। तदेवात्मा यस्मिन् भ्रान्त्या ब्रह्माण्डाः सदेवभूताः दृश्यन्ते। स तु सर्वद्रष्टा। सर्वकर्त्ता सर्वहन्ता सर्वज्ञः। तस्मादन्यन् किञ्चिन्नविद्यते। स एव महतो महीयान् अणोरणीयान्। चिदानन्दसाक्षीस्वरूपोऽयं। अनधिकारिणस्ते क्वचात्मबोधः।

अव—बहुवर्षाणि यावदहं तपामि। तथापि त्वं भ्रूणोऽपि मे गुरुः। त्वां नमामि। कथय कथमात्मानं जानामि परमानन्दं।

गर्भः—शनैः निष्कामकर्मभिः वासुदेवभक्त्या चित्तशुद्धौ रजस्तमसोः निवृत्तौ सत्वे प्रवृद्धे श्रद्धया गुरुसेवया विवेकोत्पत्तौ नित्यानित्यवस्तु-विचारोपरतितितिक्षाभिः असम्भावनाविपरीतभावनाभ्यां मननादिभिः आत्मज्ञानाधिकारः अत्र शास्त्रगुरुवाक्यश्रवणं प्रथमा भूमिः। तत्र विश्वासः द्वितीया भूमिः। कोऽहं किमिदं वा जगत् इत्यादिविचाराः अष्टाङ्गयोगा-भ्यासाश्च तृतीयाभूमिः ज्ञानस्य। चतुर्थभूमौ वासनानाशः। इयं भूमिः विलापिनीति कथ्यते। अस्यां सर्वाणि विलीयन्ते अतः परं शुद्धसमाधौ आनन्दोत्पत्तिः अत्रापि मायाविद्याबीजं वर्त्तते अष्टादशविधा माया।

जाग्रत् स्वप्नपुर्य्यनन्तरं दिव्यमायाः वर्त्तन्ते यथा—मधुमती, विषयदर्शिनी, शब्दमयी, सरस्वती, अणिमादयः, जालन्धरी, लौकिकी, काममयी, सिद्धिमयी, कल्लोलिनी, रुद्राहंकार पार्वती सर्वमयी च । ईश्वरानुग्रहादेव मायापाशान्मुक्तिः ।

अव—मायानां कार्य्याणि कृपया कथय ।

गर्भः—नाहं वक्तुं शक्नोमि भूयसा । गर्भनिद्राकर्षयति मां । संक्षेपतः वच्मि त्वां निमित्तीकृत्य लोकानुजिघृक्षया । आब्रह्मस्तम्बपर्य्यन्तं मायामयं । अष्टादशमायानाशात् षष्ठभूमिसंप्राप्तिः । आनन्दघनं सुषुप्तिरिवायं अत्रादौ शब्दश्रवणं तदनन्तरं परंज्योतिः दर्शनं । अतःपरं सप्तमी भूमिका या अप्रका या वचनैः । अत्र निर्विड़ह्लानन्तसुखं यद् ब्रह्मेश्वरा अपि कामयन्ते एवंभूतं विष्णोः परमंपदं केन लभ्यं यदर्थं यज्ञतीर्थतपोदानयोगादयः । कालरहितं यत्पदं देवा अपि स्तुन्वन्ति तं शरणमुपेहि अवधूत ।

इत्थमुपदेशश्रवणेन कृतकृत्यः सोऽवधूतः गर्भपुरुषं गुरुबुद्ध्या प्रणम्य तस्मात् मातुः शान्ति काञ्चनपर्वते पुनर्मिलनं च स्वस्य ज्ञात्वा स्थूल शरीरं प्रत्यागतः चिन्तामग्नं राजानमेवमुवाच । राजन् ' अद्यप्रभृति राज्ञाः सौख्यं भविष्यति । विचक्षणपुरुषस्य सम्भवः त्वत्तः भवत्यचिरात् । इत्युक्त्वा वनं प्रयातेऽवधूते शशिप्रभा जाग्रता बभूव तां स्वस्थां ज्ञात्वा राजापि प्रसन्नोऽभवत् ।

अनन्तरं यथाकालं कुमारजन्म अभूत् वैशाखशुक्लत्रयोदश्यां कर्कट-लग्नस्थे गुरौ चन्द्रे सप्तमे परमोच्चे मङ्गले मिथुने बुधे मीने शुक्रे षड्वर्ग-शुद्धे तुलायां शनैश्चरे कलायुक्ते एवं चतुःसागरयोगे रवौ च मेषे। वासुदेवकृपया शिशोः जन्मनि मोहः न जातः। विष्णुरूपिण्यां क्षितौ पतितः विश्वनाथं चन्द्रशेखरं सस्मार।

एतस्मिन्नवसरे हरिणी नाम योगिनी स्वेच्छया बालघातिनी बाल-रक्षिणी वा सूतिकागेहप्रतिहारिणी समायाता। षष्ठीरात्रौ सा प्रहारिणी सती शिशून् नयति रक्षति वा निजेच्छया। अतः तस्या एव शिशवः वस्तुतः न तु पित्रोः। सास्य कुमारस्य जन्म निरीक्षमाणा विकलनयनैः तस्माकपि तवती यथा पूर्णचन्द्रं कालमेघः। इतरेषां तत्रस्थानां मोहमुत्पादयन्ती अद्ध्यगात्रां विशालकलेवरां विवृतजिह्वां आनाभिलम्बितपयोधरां कृष्णवस्त्रपरिधानां कनकपुष्पशोभितकेशपाशां मृदङ्गमध्यां बलाकाजघनां जम्बुफलाधरां कृष्ण-सर्पिणीमिव भ्रूलतां वहन्तीं चक्राक्रान्तकोटरगतपिङ्गलनयनां तप्तहाटकामिव रोमावलीं बिभ्राणां तामालोक्य कुमारोऽचिन्तयत् केयं पिशाची। कैलासे पार्वतीसन्निधौ योगिन्यः मया दृष्टाः नचेयं। मां नेतुं कथं वा विक्रमते। इति विचिन्त्य पार्वतीं स्मृत्वा मेरुमुद्रां दधार लीलया। अनेकशः आकृष्ट-मपि अविचलितमिमं सा पिशाची हन्तुमैच्छत्। आकर्षणश्रमेण स्वनासा-कर्णेभ्यः रुधिरस्रावं विलोक्य तस्या अभिप्रायं विदित्वा कुमारः अट्टहासं चकार यदाकर्ण्य योगिनी परमविस्मयं गतवती। कुमारदर्शनात् स्तम्भिता भीता श्वसन्ती सा चिन्तयामासान्तः— अहो विचित्रमेतत् सकलशिशवः मद्बलेन गृहीताः परन्तु सद्योजातोऽयं उच्चैः हसति। सत्यमेव प्राक्-दैवकथनं। अवतरावर्तितयाः वासुदेवभक्ताः भवेयुः नूनं वैष्णवोऽयं। अन्यथा पर्वतोत्तलनसमर्थायाः मे कथं पराजयोऽत्र। उदन्तं जानामि एव।

इति विचारयन्तीं योगिनीं अपृष्टोऽपि कुमारोऽवदत् । अयि नीलच्छाये केतुमाये ! मां ग्रहीतुं कथमीदृगुत्साहस्ते ? प्रकृत्या पिशाचयोनौ प्रपञ्चरूपं धारयन्ती अज्ञानाद् हिंसाव्यापारैरविश्रान्ता जीवभावेन परापरं अगणय्य श्रेयःपथपराङ्मुखी दुःखिनी कथं सुखं प्राप्स्यसि ? अरण्ये मालतीपुष्पमिव व्यर्थयौवना त्वमिदानीं जरती अपि नोत्तमबुद्धिं करोषि यया कैलासकन्दरे पार्वतीपरिचारिकापदवीमपि लप्स्यसे । आसुराचरणात् हिंसन्तीं त्वां हिडम्बीति कथयन्ति लोकाः । तव दुःखालोकनेन द्रवीभूतोऽहं । सद्यः दुष्टबुद्धिं जहिहि मद्वचनात् । तत्श्रुत्वा सा सूतकहारिणी आत्मानं धन्यां मन्यमाना तं बालं उपदेशप्रदानाय प्रार्थितवती । त्वां गुरुपदेन वृणोमि वत्स ! परिचारिणी धात्री भविष्यामि ते । मां दयस्व येन दुःखमतिक्रम्य अप्रमेयशिवस्य सन्निधिं गच्छेयम् । इत्थमनुरोधात् तां श्रद्धामयीं विज्ञाय कुमारः प्रोवाच— अवश्यं ते प्रार्थना पूरयितव्या मया । परन्तु नचाधुना, मद्धात्रीरूपेण तिष्ठन्तीं वासुदेवकीर्त्तनपरायणां त्वामहं युवावस्थां प्राप्यैवोपदेशं करिष्यामि । वासुदेवनामव्याहरणमेव सवज्ञानोपदेशमूलम् । क्षीरसागरात् यथा द्रव्याणि जातानि तथास्मादेव सर्वज्ञानं प्रभवति । इत्युक्त्वा विरमति तस्मिन् कुमारे सा पिशाचीमूर्त्तिं परिहृत्य तत्क्षणात् मानुषीं तनुं दधार । तस्याः पिङ्गलकेशाः कालिन्दितरङ्गशोभां, तिमिरान्धकालशरीरं चम्पकवर्णं, विकृतवदनं शरच्चन्द्रद्युतिं, विकृतनयनं नीलोत्पलकान्तिं, कृष्णसर्पिणीवभ्रूलता कामचापशोभां, जम्बुफलाधरः बधूलिरङ्गम्, नासिका तिलपुष्पाकारं, बालचंद्रारुणादन्तपङ्क्तिः कुन्दशोभां, विद्युद्जिह्वा रक्तकुमुदाभां, कनकपुष्पिताकवरी सुरभिकुसुमं, जानुलम्बितपयोधरौ बालेभकुम्भलक्ष्मीं, वकजघनं रम्भाश्रियं दध्रः । कर्णे ताटङ्कं धारयन्ती कटाक्षेन लोकान् मोहयन्ती राजहंस-

गामिनो चेलशोभिनी सा पुरजनेभ्यः संज्ञां दधाना धात्रीरूपेण वर्त्तमाना वभूव तत्र। अनन्तरं पुत्रजन्मवीक्षणात् पुरवासिनस्ते हृष्टा महोत्सवं कृतवन्तश्च। सूतकहारिणीं वीक्ष्य सर्वे प्रसन्नाः षष्ठीदेवीं मन्यमानाः वालस्य धात्रीं चक्रुः।

एवं राजकुलनभसि पूर्ण्णचन्द्रायमाणेन तेन कुमारेण शशिप्रभामनो-कुमुदः विकाशितः राज्ञः चिन्तामेघश्चदूरीकृतः। दरिद्रः निधिमिव, जन्मान्धः दिव्याञ्जनमिव, मुमूर्षुः महौषधिमिव स्थावर :जंगमत्वमिव, मुमुक्षुः जीवन्मुक्तिमिव, कुमारलाभेन हृष्टः स नृपतिरपि विपुलधनभोजन-वस्त्रालङ्काराश्वगजरत्नानि वितरन् भृशं मुमुदे।

अनन्तरं सुलक्षणनितम्बवत्यः स्त्रियः सम्मिलिताः षष्ठीपूजान्ते "रुद्रसुधानिधिः" इत्यभिधानं शिशोश्चक्रुः। जीवभावात् क्षुत्ताडनात् इतराणामिवरुद्यमानः शिशुः कोऽहं कोऽहं अनूचानः जाग्रत्स्वप्नादिक-मावृत्य ज्ञाननाशभयात् रोदनेऽपि शिवोऽहं शान्तोऽहं निर्वैरोऽहं शुद्धोऽहं इत्थ विललाप येन अमङ्गलं शङ्कमानाः पुरजनाः वहुधा अरिष्टशान्ति कृतवन्तः।

मातुस्तन्यपानावसरे भगवत्या विचारितमित्थं यत् जन्मकालेऽपि उपनिषदः पठन्नयं शिशुः विष्णुमाययापि अस्पृष्ट आसीत्। तत् कथमस्य संसारचेष्टा प्रारब्धभोगो वा। भोगान्तेऽस्य योगाप्तिः नियत्या निर्दिष्टा। ततः सहसा अहंकारमाश्रित्य रुदन्तं शिशुं वैष्णवीमाया पिहितवती। क्षीरपानेन सह माया प्रविष्टा। रसनायां स्वादुबोधः संजातः। पुनः पुनः स्वादुतायाः पानलालसा। एवं जडा अपि माया अन्तःप्रविश्य मुक्तस्याप्यस्य

पुरुषस्य शिवानुचरस्य मोहमुत्पादयामास। मायाकर्षणात् निद्राप्रभावात् तुरीयात् अधोऽवतीर्णोऽभूत् सः। योगनिद्रायां तिरोहितायां स मोहनिद्रां समगमत्। नीलमेघमालया चन्द्रज्योत्स्ना इव आत्मज्ञानमाच्छन्नमभूदस्य। अजडानन्ताखण्डः पुरुषः मलिनमायया तन्द्रया पिहितोऽभूत्।

अनन्तरं चन्द्रकलेव दिनेदिने वर्द्धमानः स शिशुः गुरुजनान् मोहयन् पद्मवने राजहंस इव शुशुभे। देहस्य जम्बुनदकान्त्या निष्कलङ्कचन्द्रमुखेन भ्रूलताकुण्डलबन्धुकाधरैः नीलाञ्जनकेशपाशपद्मनेत्रापाङ्गकम्बुकण्ठप्रशस्तवक्षआजानुबाहुलीलागतिसिंहविक्रममधुरशिरीषसौकुमार्य्यैश्च जनकजनन्योः आनन्दयिता भूत्वा आरक्तचरणाङ्कितमीनपद्माङ्कुशचिह्नैः योगभ्रष्टरुद्रांशं वैष्णवांशं च दर्शयामास। एवं महापुरुषलक्षणान् विलोक्य प्रसन्नमना अनङ्गपद्माकरः काले सरस्वतीपूजानन्तरं उदयनाचार्य्यं अध्यापनायां नियोजयामास। अक्षरगणितशिक्षानन्तरं पाणिनिसारस्वतैन्द्रचान्द्रमाहेश्वरशाकटायनोणादिककलापकौमुदीचन्द्रिकाद्यष्टादशव्याकरणानपि पपाठ। संज्ञासन्धिलिङ्गविभक्तिनिपातकारकसमासाद्यष्टादशांशेष्वपि तस्य व्युत्पत्तिरभवत्। अनन्तरमचिरेण धर्मशास्त्रमीमांसापातञ्जलवैशेषिककौमारकतर्कपञ्चरात्रागमवेदोपनिषत्स्मृतिशास्त्रान्ते बौद्धकापालिकक्षपणकचार्वकादीनां मतं विज्ञाय मत्स्यकूर्मवराहवामनभविष्यमार्कण्डेयविष्णुनृसिंहाग्निपद्मब्रह्माण्डशिवपुराणानपि अधीतवान्। ततः ज्योतिषकाव्यायुर्वेदछन्दोनाटकाश्वगजनरचिकित्सादिकं पठित्वा शिल्पसामुद्रिकेष्वपि शास्त्रेषु निष्णातोऽभूत्। दशाब्देऽपि शास्त्रे प्रवक्ता, विद्यासु सक्तः, गुणेषु रक्तः, वासुदेवे भक्तः सत्यऽधिष्ठितः दरिद्रे दाता स बालकः गुणाकरो नामाचार्य्यमुपगम्य धनुर्वेदे शिक्षितोऽभूत्। आदानसन्धानाकर्षणामुञ्चनगतिमतिदृष्टि-

स्थैर्यरोपणजृम्भणस्तम्भनमन्त्रौपासनयज्ञारोपणमोक्षणक्षेपणखड्गगदामल्ला-दिसकलयुद्धांशे पारंगमस्य तस्य नारायणपाशुपतब्रह्मवज्रचन्द्रवारुणमहा-कालाग्निमेघपवनजलनागपाशादिकेष्वपि सम्यक् ज्ञानं समभवत्। एवं विद्याभ्यासैः द्वादशवर्षाणि व्यतीत्य स कैशोरे प्रविष्टः अभूत्। क्रमशः रोमाणि कृष्णवर्णानि संजातानि। दन्तान् नवसम्भवान् हेमन्तपद्मे मत्तभ्रमर इव नयने च विलोक्य विवेकरत्नाकरेण मन्त्रिणा स राजा कन्याया अन्वेषणं कारितवान् पुत्रकृते परन्त्वनुरूपां कन्यां पृथिव्यामपि भ्रमन्तः दूता न लेभिरे।

राज्ञोऽवकाशं विज्ञाय पूर्वदिश आगतः दूतोऽवदत् राजन्। मालव-सौराष्ट्रमहाराष्ट्रहस्तीनावन्त्ययोध्यामथुराकाञ्चीकाशीदेशादिक परिक्र-म्यापि मणिमान्पर्वताग्रे जम्बुनदीतीरे काशीराजदुहितरमनङ्गावलीमेव कुमारस्यानुरूपां दृष्टवान्। सा सर्वगुणसुलक्षणा वरवर्णिनी कुरङ्गनयना चक्रवाकस्तना गजेन्द्रगमना कोकिलवचना घनजघना पीवरनितम्बिनी अपि केशाग्रेषु पिङ्गलत्वात् प्रत्याख्याता मया। मन्दाकिनीकूले भद्रासन-देशराजवीरसेनकन्या लीलावती सर्वलक्षणापि दन्तुरत्वात् पूर्वसमुद्रो-पान्तब्रह्मदेशे चित्रतरङ्गिणीनदीपार्श्वे हिरण्यगर्भकटके भूषणेश्वरलिंग-समीपे चन्द्रकेतुदुहिता मन्मथकला अनुरूपापि मुखे तिलचिह्नाभावात् निराशीकृता एव।

अनन्तरं जलस्तम्भनमणिं कर्णे कृत्वा सूक्ष्माहारसामग्र्यः पाथेयं धृत्वा समुद्रं लंघयन् अपि पादुकाविद्यया बहुद्वीप द्वीपान्तराणि सुवर्ण-मणिरत्नमहासर्पसिद्धाश्वमुखीपूरितानि भ्रमन्नपि अनुरूपा कन्या न दृष्टा मया। गुणनिधानो नाम पश्चिमदिग्दूतः बृहस्पतिरिव मन्त्रवेत्ता ब्राह्मणः

एवमप्यवदत् । स च सिद्ध्रुमगधविन्ध्यमन्दरादीनतिक्रम्य रत्नकच्छुदेशे अमृतकलानदीतीरे मधुमतीकटके वैश्रवणोपमवैरिपन्नगराजदुहितरं मदनवल्लभां ददर्श । सजीवमन्मथाधारहासप्रभामयो सा तरलतरङ्गनयनयोः शुक्लतया क्षीरचन्द्रकुमुदपुण्डरीककम्बुमुक्तागङ्गाफेनतुहिनशोभां, कचानां कृष्णतया नीलाञ्जनभ्रमरमरकतजीमूतनीलोत्पलमयूरपिच्छासितपुष्पगर्वं, अधरशोभया च दाडिमकुसुममाणिक्यबन्धुजीवपक्वबिम्बरक्तोत्पलबालारुणमन्दाराणां रुचिं तिरस्कुर्वन्त्यपि शङ्खाङ्कुशचिह्नानामभावात् लक्षणहीना संजाता। ततोऽपि पश्चिमदेशे माणिक्यपर्वतः दृष्टः यस्तु तेजसा सूर्य्यं निन्दति स्म । तत्र त्रिशाखायुक्तः कल्पपादपोऽपि दृष्टः । वृक्षस्याधःप्रदेशे मणिपीठस्योपरि धवलवर्ण्णपुरुषः कोऽपि स्थितः आसीत् । सहस्रचन्द्रोपमस्य तस्य शिरसि सप्तफणी, कण्ठे वनमाला चिन्तामणिरपि शोभमाना आसन्। तत्सन्निधौ अमृतमयसरोवरे हंसभ्रमराकीर्ण्णे सूर्य्यस्य उर्ध्वकरैः विकाशितकमलवने पद्मिनीकन्याः शुशुभिरे। परन्तु एताः प्रभाते कन्यारूपाः मध्याह्ने यौवनवत्यः सायं वृद्धाः रात्रौ विलीनाः बभूवुः । अतः नित्ययौवनाभावात् ता अपि अयोग्याः संजाताः। तस्मात् देवताकिंपुरुषाणां वासभूमिं गच्छन्नपि सदृशीं कन्यां न दृष्टवान्। इत्युक्त्वा तस्मिन्नपसृते सति दक्षिणदिग्दूतः चिन्तामणिविद्याविचक्षणः वैचित्रः समागतः । स राजानं नमस्कृत्य भ्रमणवृत्तान्तं वर्णितवान्। अनन्तरमुत्तरदेशस्य दूतोऽवदत् राजन् । बहुदेशं गत्वाहमवशेषे हरिद्वाराद् दूरे शुक्लपर्वतः दृष्टवान् यस्य शुक्लकान्त्या जगत्प्रतिबिम्बितमासीत्। तत्राकाशगङ्गा मेखलाकारेण प्रवहति स्म। क्षीरसमुद्रे श्वेतहस्तीव समन्तात् तुहिनेषु तत्पर्वतः बभौ। सन्ध्याभ्राणि तन्मेखलां मण्डयन्ति स्म। तत्र चन्द्रनिर्मलः एकः सरोवरः

वर्त्तते यत्र स्नात्वा नरो देवत्वमश्नुते। सन्निधौ सुवर्णवृषभे पुरुषैकोऽपि दृष्टः, यस्य शिरसि यमुनाजलाभिरामा जटा अर्द्धचन्द्रश्च दृश्यमानः। तत्र चन्द्रांशुभिः आलोकिते अद्रौ दिव्यपुरुषाः शून्ये विहरन्ति स्म तप्तकाञ्चनमाणिक्याग्निवर्णजटासु क्रीडतामुरगानां फणामणिशिखाः अग्निरेखोपमाः सहस्रशः आकाशमुद्गच्छन्ति स्म। पुरुषस्य दक्षचक्षुः सूर्य्योपमं ललाटचक्षुश्च वडवानल इव लक्षितः। दृष्टिपाते त्रैलोक्यं प्रतिफलितं आभाति स्म। ततः सर्वथा दुर्निरीक्षोऽयं। सन्ध्याभ्ररुचिरविपरिधानवतः कण्ठनीलं नीलजीमूतमयूरकण्ठशोभां तिरस्करोति स्म। पद्मनृणालोपमचतुर्बाहुषु उर्ध्वकरयोः शूलडमरू अधःकरयोः मृगाभये वहन् स समधावचल इव स्थित आसीत्। कनकवृषभाश्रयः कोऽपीतरजनः मर्कटाकारमुखः शूलहस्तः पर्वतं रक्षति स्म। गजमुखः कोऽपि बालकश्च तत्र क्रीडति स्म नागंधृत्वा सुवर्णेन्दुरेण सह। तत्रैका नारी च स्थिता या साक्षात् लावण्यनिधिरिवासीत्। अस्याः सौन्दर्य्यं सरस्वतीशेषावपि वर्णितुमसमर्थाविव। तां विलोकयति स्म समाधिलीनः पुरुषः सः। सा पार्वती एवासीत् नोचेत् कुमारयोग्या भवितुमर्हति। इत्याकर्ण्य स राजा विस्मयमवाप्य पुत्रसदृशीकन्याया अलाभात् अप्रहर्षेण कालं निनाय।

गतेषु कालेषु कामानन्दो नाम कश्चित् युवा योगी राजप्रासादमागच्छत् पिशाचादिभिः अदृश्यतया परिवृतः। प्रागेव सकलविद्याधुरीणोऽसौ निम्बगन्धकनागरसाभ्रकर्पूरादिकल्पविधया निवारितवलिपलितः कामस्यैव शरीरं बिभ्राणः मणिसाधनसम्पन्नः कल्पतरुचिन्तामणिपञ्चवक्त्रगरुडचतुर्भुजकामधेनुसाधनसिद्धश्चासीत्। श्मशाने मुण्डमालां स्थापयित्वा रक्तमाल्याम्बरधरेण तेन वेतालसाधनं च कृतं। अनन्तरं

मृतशवभस्मनाग्नौ कृष्णमेषरुधिरं दत्वा भूतानपि भृत्यत्वे कृतवानसौ। पश्चात् मृतपिण्डोपरि पूर्वाभिमुखेनोपविश्य नदीकूले वटस्याधः महानिशायां बलिपूजान्ते मुण्डमालया दर्पेण भैरवीवशीकरणानन्तरं अपरापरयोगिनी-साधनान्ते षण्मासैः सुन्दरीयक्षिणीं च वशमनयत्। मन्दिरविरलस्थाने शिवालये स्थित्वा इन्द्रियनिग्रहेन स्फटिकमालया द्वादशाक्षरमन्त्रसिद्ध्या मातृका शिवापि वशीकृता तेन। श्रीखण्डशैले अष्टाक्षरमन्त्रेण रतिप्रियां, कनकपुष्पारण्ये काञ्चनपुष्पेण नीलमणिमालया सायमेकपदमास्थितः घृतलिप्ताङ्गः एकवर्णगाभीक्षीरेण अपामार्गेण पायसान्नं कृत्वा कर्णपिशाचीं, मनोहारिणीयक्षिणीं धूम्रमन्दाकिनीतटे मन्दारवने मध्याह्नकाले एकादशाक्षरेण, कमलिनीयक्षिणीं कमलसरोवरे नाभिमात्रजले तिष्ठन् पुष्करमालया, अष्टाक्षरेण उपसर्पायक्षिणीं अञ्जनप्रतिमां नीलोत्पल-नैवेद्येन, एवं दर्शिणीं वेतालीं मोहिनीजालन्धरीविरूपाक्षीसिद्धमाता-भगनीसुरसुन्दरीः बगलांत्रिपुरां भुवनेशीं च लाकिनीवाकिनीशक्तिसहितं प्रसादितवान्। भुवनशीं परमश्रेयश्च याचितवानपि। परन्तु श्रीकृष्णं विना मोक्षदानाय न कोऽप्यलमित्युक्त्वा सा देवी मोक्षस्वरूपं क्रिया-हङ्कारमनोबुद्धिविरहितं सत्यानन्तसत्तामयं तुरीयं इति कथितवती। एतादाकर्ण्य स कामानन्दः देव्याःपुरतः भोगहीनं मोक्षमस्वीकृत्य भोगमयं विषयसुखं मनसा कल्पितवान्। विषयादन्यत्र कुत आनन्दः। विषयभोगेन सुखं। नोचेत् कथं खण्डेन्दुचूडस्याङ्के हिमाद्रिकन्या शोभते। शिवः स्वयं भोगान्भुक्त्वा जगतः मोहाय स्त्रियमज्ञानहेतुं कथयति वा। अरण्ये उपवासेन असङ्गेन कः सुखं विन्दती वा। दिव्यागारे हेमाङ्गीभिः चन्द्रज्योत्स्नायां रात्रौ संगतः मलयवातेन वीणाश्रवणेन निविडाश्लेषेण परमसुखं भवति एव। अतः चिरयौवनं दिव्यस्त्रियं भोगांश्चप्रदेहि मह्यं इति

संप्रार्थ्य देवीं प्रणम्य नीरवं तस्थौ। तन्मनोगतं ज्ञात्वा जगदम्बा तदर्थं धौत्य सनमुद्रादिसाधनस्यावश्यकतामुक्त्वा प्रथमतः आसनमुद्राप्राणायाम-रहस्यं कथयित्वा शरीरवर्णनान्तरं योगशिक्षां विस्तारयामास। पश्चात् कलातत्वमपि उक्तवती। यथा— चन्द्रकलाः— आलोला, कल्लोलिनी, उज्वलन्ती, उन्मादिनी, तरङ्गिणी, सोमयन्ती, लम्बटा, लहरी, लोला, लालती, प्रकृतिः, श्रवन्ती, प्रवाही, सन्नधा, प्रसन्ना, प्रसादशीला इत्येताः। आदित्यद्वादशकलाः— तपिनी, ग्रासिनी, उष्णिणी, आकोचनी, शोषणी, प्रबोधिनी, अक्षिणी, तुष्टिनी, उद्धिनी, कृष्णरेखा, किरणवती, प्रभावा इत्येताः। वह्निदशकलाः— दाक्षणिका, नागरिका, ज्वाला, स्फुलिङ्गा, प्रचण्डा, पावका, रौद्री, दाहा प्राणा, सञ्जीवन्यादयः। दशनाड्यः— इडा पिङ्गले नासाद्वारे, सुषुम्ना ब्राह्ममार्गे, अधरे हस्ति-जिह्वा, कर्ण्णद्वारे गान्धारी, चक्षुषि पूषालम्बुषे, गूह्ये कौक्षी, लिङ्गे द्विसप्ततिनाड्यः दृश्यादृश्यतया वर्त्तन्ते शरीरे। दिने दिने आसां द्विमात्रया नाशात् शतवर्षेण देहो मृतः भवति। अनन्तरं प्राणायामेन निरूपयोगेन उद्‌र्ध्व शङ्खिन्यां सहस्रदलप्रवेशः। ततः प्रत्याहारः। अग्निमाहेन्द्रवारुणी-वायुभिः अग्निवेलायां केवलं निम्बहरितकीधात्रीमधुआर्द्रक सैन्धवइक्षु-गव्यक्षीरयवधानशाल्यन्नशर्करामरिचपटोलश्रीफलकृष्णतैलादिकानि अल्पशः भुक्तव्यानि इति आहारसंयमः। अतःपरं ध्यानधारणादिभिः योगः साधनीयः चिरयौवनाप्त्यै इत्युपदेशान्ते देवी तिरोदधे।

एभ्यः किञ्चित् संसाध्य शक्तिमान् कामानन्दः वशीभूतं भूत-चूडामणिं आहूय तस्मिन् नगरे मनुष्यशरीरोपेतस्याभिनवचैतन्यस्य समाचारं पप्रच्छ। तत्कृते मृतसजीवनी कन्या च कुत्र संजाता तदपि

पृष्टवान्। एतदाकर्ण्य स भूतः प्रत्युवाच— पार्वत्याज्ञया मानसतीरे सा दिनानि तपन्ती मृत्युलोके धर्मध्वजनृपतेः दुहिता यथाभवत् तत्श्रुणु। तत्शोभां निरीक्ष्य व्यथिता लक्ष्मीदेव्यपि पत्युरश्रद्धां शङ्कमाना तां दुहितृत्वेऽपि स्वीचकार यतः तेन नारायणस्यापि दुहिता भवेत् सा। सिन्धुनदीतीरे पृथ्वीतिलककटके धर्मध्वजो नाम नृपतिः महिष्या-कोकिलवत्या सह विष्णुसेवापरायण आसीत्। वासुदेवे अनन्यभक्ति-भावात् तस्य देहबुद्धिरपि नष्टाभवत्। जड इव पश्यन्नपि न पश्यति शृण्वन्नपि न शृणोति, तं स्त्रियः भोजयन्ति। अमात्यैश्च राज्यशासनं स कारयति। एकदा एकादश्यां रात्रिजागरणेन विष्णुं ध्यायति तस्मिन् शत्रुभिः राज्यमाक्रान्तं अभूत्। चारैः महिषीभिश्च बोधितोऽपि समाधिनिष्ठः स किञ्चिदपि न ज्ञातुं शक्तोऽभवत्। अग्निसंयोगाय यतमानेषु शत्रुकुलेषु जड इवाचरति च तस्मिन् वासुदेवः सुदर्शनचक्रेण नगरं रक्षितवान् तद्भक्तिनिष्ठया। कोकिलवत्यपि लक्ष्मीं निरन्तरं पूजयति स्म। दिनेषु गच्छत्सु लक्ष्मीदेवी तस्याः पुरतः आविर्भूय वरं वृणुष्वेत्यवदत्। आत्मानुरूपां सन्ततिं देहीति प्रार्थनया सा देवी पार्वतीदेहोद्भवां तां कन्यकां समर्पितवती। कन्यायाः कर्णमूलेऽपि उपांशु एवं कथितवती यत् चैत्रशुक्लत्रयोदश्यां श्वेतसरोवरकूले यः कुमारः त्वत्-स्तनौ शम्भुरिव वर्णयिष्यति त्वामपि चन्द्रशेखर इव प्रतिभातः भविष्यति कण्ठे च ते अमृतमणिमर्पयिष्यति तमेव भर्त्तारं विद्धि, सत्वरं त्वमपि तं स्वप्ने द्रक्ष्यसि। इत्याज्ञाप्य कन्यां कोकिलवत्यै समर्प्य देवी नारायण-समीपमाजगाम। सैव जगत्यतिसुन्दरी वर्त्तते पृथ्वीतिलककटके। उपायेन प्रापणीया इति कामानन्दमुक्त्वा स भूतः विरराम।

तदाकर्ण्य अष्टैश्वर्यंशाली स योगी मित्रीभूतं भूतचूडामणिं आलिङ्ग्य तां मन्मथसरिन्निधिमिवकन्यकां प्रापयितुं प्रार्थयामास। एवं कामवशीभूतस्य कामानन्दस्य क्रमशः विरहलक्षणानि जातानि। शीतलश्वासः तप्तोऽभवत्। अन्ने रुचिः परिहृता निरूपायता संजाता। चन्द्रांशुरपि तापदो बभूव। श्रद्धा तिरोदधे हृदयात्। मलयः दाहयितुमारभे। कन्यासक्त्या अप्राप्तमपि प्राप्तमिव मेने, निखिलं कन्यामयं विलोकनात् हठयोगहानिः देहभङ्गश्चजातौ। एवं कामपीडितोऽसौ अनीकखेचरं आहूय प्रोवाच-विष्णुचक्रमवज्ञाय तत्कटकात् कन्या परिहरणीया एव। एवं निश्चित्य वारुणीवेलायां भैरवं स्मृत्वा अवनीतिलककटकं यात्रांचकार भूतवेतालैः सह पिशाचनीतं शुद्धस्पटिकाभरथमारुह्य। व्य.घ्रमुखैः श्रृगालमुखैः भूतादिभिः परिवृतोऽसौ तदानीं रुद्र इव बभौ-रथारूढः। भूताः धूम्रवर्णाः मेघमण्डलायमानाः घोररावैः गगनपदव्यां प्रजाः पीडयन्तः रथं निन्युः। त्रयोदशहस्तप्रमाणाः सूचीमुखास्ते सततं तृषार्त्ताः अपि ययुः। योगिनः कामानन्दस्य आज्ञया समानामचण्डाः जलं तेभ्यो ददुः। योगिन्यः चामरधारिण्यः तत्पार्श्वं मण्डयित्वा गच्छन्ति स्म। भूताधिपः अनीकशेखरः अश्वारूढः इतरे च गदारूढाः दृष्टाः तस्यां यात्रायां। एभिः सह कामानन्दः रथोपरि योगिनीपत्न्या सह हरपार्वती शोभामनुकृत्य चचाल। एषां गर्जनैः महाशब्दः समुद्भूतः। भूतसेनापतिः अनिकखेचरः, प्रेतसेनापतिः अमुक्तकापालिकः, मल्लसेनापतिः जडमल्लः, चण्डसेनापतिः भैरिमुण्डः, वेतालसेनापतिः कालकल्पः, पिशाचसेनापतिः कपिलपैशुनः, वीरसेनापतिः धूम्रशिखः, यक्ष सेनापतिः मणिभद्रः, ब्रह्मदैत्यसेनापतिः रक्ताक्षः, गूह्यकसेनापतिः, कान्तिमुखः, यक्षिणीसेनापतिः शिवामुखः, मातृकासेना मायासम्भवादयः

महाध्वनिना गगने विक्रामन्तः पिशाचसेनां मार्गं दर्शयन्तिस्म तदानीं। कटकात् क्रोशंदूरात् आम्रोद्यानं वीक्ष्य तत्र रतिप्रियया पुरं निर्माय कल्पचिन्तामण्यन्नपूर्णाविद्यया भोग्यवस्तूनि पूरयित्वा कामानन्दः सर्वैः सह वसतिं चकार। कियद्दिनान्ते कङ्कालमुखवेतालं गोपनेन कन्यावासभूमिमार्गकल्पनाय स प्रेरितवान्। तदाज्ञया स वेतालः विडालरूपेण कटकमाविश्य कन्यागतिविधिं परिलक्ष्य पञ्चदिनान्ते योगीसमीपं प्रत्यावृत्य तमवदत्— रथगजाश्वरथिभिः पूरितोऽयं कटकः। विपण्यः राजपथे शोभन्ते चात्र, द्वारि रक्षिणो वर्त्तन्ते। अपरूपा सा कन्या अन्तःपुरे वसति। सातु स्वप्ने कंचित् दिव्यपुरुषं वीक्ष्य विरहपीडिता सती सख्या चित्रवल्या चित्रपटे रुद्रसुधानिधिनामकुमारस्यदर्शनात् किञ्चित् शान्ता लज्जिता च तं कामयमाना वर्त्तते इदानीं। कुमारचित्रं देहल्यां मृगमदैरालिख्य निरन्तरं ध्यायन्ती तत्चित्रपटमपि स्तनमण्डले निवेश्य मनसालिङ्ग्य सखीभिः प्रबोधितापि कष्टेन कालं नयति। एवमाकर्ण्य वर्द्धितविरहकष्टोऽसौ कन्याहरणोपायं भूतवेतालैः सह परामृष्टवान्। केचित् बलात्, मायया, युद्धेन चौर्य्येण इन्द्रजालैः वा सा आनेतव्यात्र इति कथयामासुः।

अनन्तरं स योगीन्द्रः द्वादशसहस्रभूतान् प्रेषयामास कटकम्। ते सर्वे तस्याज्ञया कटके उपद्रवं चक्रुः। उत्पाताः प्रादुरासन्। अन्तःपुरे महान् कोलाहलः संजातः। करिणः पाशमुक्ताः मार्गे भ्रमणं चक्रुः। स्त्रियो विवसना बभूवुः। काकाः शृगालाश्च राजमार्गे चरन्तः अमङ्गलं सूचितवन्तः। कुत्रान्धकारः कुत्र च सैन्याः परिदृष्टाः। महासर्पाः इतस्ततः चरितुमारेभिरे। लोकाश्च भीताः दिक्षु पलायिताः। केचित् कपाटपाटनात्,

केचित् वृक्षारोहणात् गुहायामात्मगोपनेन वा जलेषु च नृसिंहं स्मरन्ति स्म। एतत् दृष्ट्वा, स राजा वासुदेवं चिन्तयामास। तत्क्षणात् सुदर्शन-चक्रेण सर्वोपद्रवाः निवारिताः भूताश्च आहताः सन्तः भयेन पलायितवन्तः योगिनः पार्श्वम्। तेभ्यः चक्रबाधां स्मृत्वा कुपितः भैरवीं सस्मार। लोलजिह्वातिकाया विस्तृतवदना सततमाहारं याचमाना कालचक्रलोचना मुण्डमालातिभीषणा रक्ताम्बरा गर्जती सा तत्रायाता। तां वीक्ष्य भूमौ प्रणम्य स योगी पुरजनान् निहत्य कन्यामानेतुमादिदेश। भैरवी तत्र गत्वापि चक्रतेजसा तिरस्कृता प्रत्यावृत्य योगिनं सर्वं निवेदयामास। तत्श्रुत्वा भूताधिपोऽवदत् —अस्मत् शक्त्या चक्रं न निवारणीयं इयं कन्या रुद्रसुधानिधिं वरयिष्यति। कन्यया सह कुमारे स्वनिलयं याते चक्रे च निवर्त्तिते अस्माभिः सा कन्या अपहरणीया एव। अतः इदानीं रुद्रसुधानिधिना सह मैत्री करणीया तस्य राज्ये। एवं निश्चित्य ते सर्वे वसुधामण्डलकटकं अनङ्गपद्माकरनृपतेः राजधानीं आजग्मुः।

अमृततरङ्गिणीनदीं योगबलेन कृष्णाजिनेन ततार स योगी कापालिकत्वात् नाविकैः निराकृतः सन्। इत्थं चमत्कारदर्शनात् विस्मिताः पुरजनाः कापालिकं प्रणेमुः। लोकसम्मानमाप्नुय स कापालिकः शून्यात् द्रव्याण्युत्पादयन् रत्नावसनालङ्कारफलानि च तेभ्यः ददौ। एवं प्राप्त्या लोकमुखैः तद्वार्त्ता प्रचारिताभूत्। कुमारं विहाय सर्वे तु तत्रागताः। तत्दृष्ट्वा कुमारसङ्गाभिलाषिणा योगिना योगिनीप्रेरणात् तमाकृष्टवान्। योगिन्या प्रचोदितः स राजपुत्रः मन्त्रीपुत्रेण गुणशालिना निवारितोऽपि, कापालिकदर्शन-मनुचितं इति श्रुत्वापि तत्रागतवान्। सिद्धः कोऽपिभवेद्वा। अनन्ताः

खलु ईश्वरमाया। महापुरुषो वा छद्मना चरतीति विचार्य्य मन्त्रीपुत्रेण सह रथारूढः स कुमारः योगिनः दर्शनाय गतवान् । तत्र कापालिकोऽपि मोहनविद्यया कुमारं मोहयितुमारभे। उपसर्पायक्षिण्या गन्धर्वनगरीं निर्माय जालान्धरविद्यया कुमारसैन्यानुकूल्या सेनां दर्शयामास। सहसा पुरदर्शनात् ते सैनिकाः वीरपुरुषा अपि विस्मयं ययुः। कुमारोऽपि कश्चिन् महायोगी समागतोऽयं इति मत्वा उपहारप्रदानात् प्रणतो बभूव। राजपुत्रस्य तनुशोभां निरीक्ष्य स योगी विस्मयमवाप। क्रमशस्तयोरालापः आरब्धः।

कुमारः — कस्मादागतोऽसि ?

योगी — पुष्पगिरेः।

कुमारः — कति वयांसि ?

योगी — तारकाप्रमाणानि।

मन्त्रीपुत्रः — पूर्वाश्रमः कुत्र ते ?

योगी — यत्र पश्यसि। जगत्प्रभवस्य कः पूर्वाश्रमः। एतदाकर्ण्य्य कापालिकं महायोगिनं पुण्यमयं मत्वा तद्दर्शनात् आत्मानं धन्यं मेने राजपुत्रः।

अनन्तरं स महाकापालिकः मन्त्रिराजपुत्रौ मायानगर्य्याः अभ्यन्तरं निनाय। अद्भुतनगर्य्याः द्वारं वैदुर्य्यमय मुच्चैर्निर्मितं चासीत्। सहस्र-रमणीभिः सम्भावितास्ते पुरं प्रविश्य अनेकगृहसरोवरश्रियः मत्तमातङ्ग-यूथान् च दृष्टवन्तः। कुत्र मल्लयुद्धं प्रवर्त्तमानं क्वापि मेषद्वन्द्वं युध्यमानं। कुत्र विद्यावादं क्वच गीतविनोदं पश्यन्तस्ते चन्द्रज्योत्स्नासिक्ताः प्रदीपकराः कन्यकाश्च दृष्ट्वा परमं मोदमवापुः। भोजनान्ते पुनरागमनाय निमन्त्रणं अवाप्य पुरस्कृतौ तौ कुमारौ स्व निलयं जग्मतुः। कुमारमुखात्

योगीवार्त्तां निशम्य अनङ्गपद्माकरश्च योगिनं निमन्त्रयामास परीक्षणाय। कुमारावपि प्रातस्तत्रागत्य नगरमदृष्ट्वा भस्मशय्यायां योगिनं शयानं दृष्टवन्तौ। नगरं क्वेति पृष्टस्ताभ्यां स योगी छन्नो वर्त्तते इत्युक्तवान्। अनन्तरं तौ मायया मोहयितुमारभे च भूयः। ततः कुमारः स्वनगरे दिनानि स्थातुं निमन्त्रयामास पितुराज्ञां निवेद्य। योगी — अस्मत्कृते नगरं श्मशानमिव उभयत्र समभावत्वात्। तथापि तव प्रीत्यै गच्छामः। इत्युक्त्वा तौ पुरः चालयन् बेतालैरदृश्यं धृतः स शून्ये पद्मासनस्थः नगरं ययौ। शून्यगमने विस्मिताः पुरजनाः पथि प्रणम्य तं राजप्रासादमभितः नीतवन्तः। राजापि तं दृष्ट्वा आसनादुत्थाय तमभिवन्द्य पूजानन्तरं पर्य्यङ्के निवेशयामास। तेनापि मनसि विचारितं नूनं सिद्धपुरुषोऽयं। नोचेत् कथमाकाशगमन सम्भवत्यस्य। योगलक्षणं च दृष्टं वपुषि। किन्तु सिद्धानां मनुष्यैः किं कार्य्यं। परतः ज्ञास्यामः। एवं विचारयति राजनि योगी कर्णपिशाच्या राज्ञः अन्तर्गतविचारं ज्ञात्वा अवदत्—। पूर्वं लोमशादिमहर्षिणां दर्शनादेव राजनः कृतकृत्याः बभूवुः। एवं मत्स्येन्द्र-गोरक्षादयोऽपि दर्शनं राजजनेभ्यः दत्तवन्तः तेषां मङ्गलायैव। तत्श्रुत्वा भयेन स राजा तस्य सपर्य्यां भूयसा चकार। इत्यवसरे कापालिकः विभूतिभूषितः सन् तिरोदधे येन सर्वे दुःखिता आकुलाश्च बभूवुः। तेषां मनोभाव विज्ञाय स पुनः पर्य्यङ्के आत्मान दर्शितवान्। अस्मिन्समये अद्भुतं मालतीमधुसंज्ञकौ गायिकागायकौ तत्रायातौ चन्द्ररोहिणीशोभां वहन्तौ। दीर्घबाहुः विशालाक्षः अलङ्कृतः माला-हरिद्वस्त्रशोभितः पुष्पचूडः स गायकः, ताम्बुलपूरितमुखः, वीणाहस्तः, वेपथुमत्या हसन्त्या मुखे ताम्बुलवत्या अपाङ्गेन पश्यन्त्या मालत्या समं, राज्ञः मनसि सन्देहं जनयामास सहसाविर्भावेन। नायं विद्याधरः

भूमिस्पर्शनात्। चक्षुश्च स्फुरत्यनयोः पुष्पमालापि मलिनायते। चन्दनबिन्दुः शुष्कायते। अतः नहि स्वर्गवासिनौ उर्द्ध्व फणामणेरभावात् नापि नागलोकादागतौ। नूनं मर्त्यावेतौ इति विचिन्त्य गातुमादिष्टवान् स राजा।

तेनाज्ञप्तः गायकोऽवदत्। राजन्! अस्ति तावत् त्रिभुवनमण्डलनयनहरणपाशरूपा, चराचरनेत्रचकोरचन्द्रिका, मन्मथभुवनविजयरथ पताका, सकलसीमन्तिनीघनविद्युल्लेखा, स्मरान्धकारपटलप्रदीपिका, अनङ्गार्ण्णवतरणनौका नवपञ्चपुरेषु दुर्लभनायिका, अपाङ्गलीलया सर्वसुखरसदात्री प्रियम्वदा राजकन्यका यस्याः लावण्यवर्ण्णनां गाथाभिः कथयामीदानीं। राजकन्यां तरुणीमणिं मध्येसंकीर्णां शशिवदनां पिकवचनां मृगनयनां लीलामत्तकरीवरगमनां जनमनोहारिणीं मन्मथकलाप्रवर्द्धिनीं कनकसौदामिनीं कामिनीं ईषद्धासिनीं यां वर्ण्णयितुं शेषनागोऽप्यनलं सर्पत्वान्निद्रालुत्वात्, चन्द्रश्च क्षयवृद्धिहेतोः। एवं कामोऽपि लावण्यद्रवणात्। पवनः स्तनवसनाभिलीनत्वात्, सरस्वती भर्तुः पुरतः वीणावादनात्। सनत्कुमारः बालत्वात्, बृहस्पतिः ज्योतिःशास्त्राभिलीनत्वात्, वासुकिः पृथ्वीवाहकत्वात्, हिमपर्वतः शीतलत्वात् क्षीरसागरः मन्थनकष्टात् तस्याः शोभावर्ण्णनेऽसमर्थाः जाताः। चन्द्रः कलङ्कितः दर्पणः धातुकठिनः। स्वयमेव तुल्या स्वस्याः सा कन्या। शङ्खः आवर्त्तत्वात् कण्ठसमतां न गतः। कौस्तुभमणिः दन्तशोभां, ऐरावतः गतिशोभां, गजकुम्भः स्तनशोभां अनुकुर्वाणा अपि समतां न याताः यथाक्रमं मध्ये छिद्रत्वात्, कर्कशरोमावलित्वात्। क्षीरसमुद्रोत्पन्नामृतपानेन काले मोक्षः भवेद् वा परन्त्वस्याः अधरामृतपानेन सद्यः

सुखमुत्पन्नं । अस्मात् हेतोः तदुपमानत्वं नार्हति । एवं त्रैलोक्य सुन्दरवस्तूनां अनुपमानत्वे जाते विधात्रा समाधिलब्धया दिव्यशक्त्या वा उपमानानि चिन्तयामास ।

नीलमेघविम्बितामृतसमुद्रतरङ्गेषु अप्सरसां कुचकुङ्कुमरङ्गिमा संयुक्तश्चेत् तत्रापि जम्बुनदजलतुरङ्गमे तीरे नृत्यन्मयुराणां पक्षच्छायानुविम्बिता चेत्, यमुनातरङ्गे वा इन्द्रनीलमणिनीलनलिन्यः खचिताश्चेत्, तदा तस्याः केशशोभाया उपमानत्वं संभवति यतः केशपाशोऽयं कन्दर्पस्य त्रैलोक्यविजयरथध्वजचामरत्वं प्रयातः । अमृतशिला मन्मथविकाराभावात्, स्पर्शमणिः स्वेदाभावात्, तरुणेन्दुः दिवसेप्रकाशासामर्थ्यात्, कन्दर्पलिख्यपत्रं अक्षरपंक्तेरभावात् तस्याः ललाटसमत्वं न ययुः । तमनुकृत्य ईश्वरो वा चन्द्रार्द्धखण्डं वहति अथवा विधातुः मदनार्णवतरणे सुवर्णतरीवायं ललाटः । तत्र सिन्दूरविन्दुः कामगगने चन्द्रोदय इव, अमृतसमुद्रे रक्तपद्ममिव हरनेत्राग्निदग्धकन्दर्पस्याङ्कुर इव दृश्यते । तत्रापि चूर्णकुन्तलमाला मन्मथलतापताकेव त्रिभुवनतरुणनयनशफरीवन्धनजालमिव वा विभाति । एवं कुटिलबहलनीलस्निग्धपरिमलसुरेखमनोहरकन्दर्पपुष्पच मरकमनीया कृष्णसर्पिणीशोभनीया मरकत लतेव लोभनीया इन्द्रनीलाभणिमालेव सा कुन्तलावलिः चन्द्रस्य कलङ्करेखेव किम्वा राहुणा चन्द्रपद्मयोः सीमानिर्णयार्थं भ्रमराणां कलहे कृतसीमारेखेव विभाति । भ्रूलता तु रसजलधौ पल्लविता मन्मथमञ्जरीलतेव दृश्यते । नयनशोभापि चटुलविरलसरलतरलस्निग्धविदग्धमन्थरमनोहरप्रेमालसभावानां वीजत्वं अञ्जनरञ्जनात्, खञ्जरीट शोभां मनोहरहासैः, नीलोत्पलत्वं उष्णतया, नीलजलत्वं प्रेमप्रसन्नत्वात्

शिशुकुरङ्गत्वं शफरीत्वं च सुवासेन, जितवतीव । एवं गुणान्तरेण कालिन्दितरङ्गामृतविम्बसरसिजदलकामकज्ज्वलेन्द्रनीलमणिलावण्यशूक्ति-चकोरगङ्गातरङ्गरतिदर्पणस्मरसारिकारतिप्रदीपान् अभ्यतिक्रान्तवतीव तस्याः नेत्रशोभा । अमृतपात्रे कस्तुरीपङ्केन जम्बुनदजले कृष्णपक्षनिशायाः कालिम्ना नीलकण्ठनीलत्वं मन्मथवारुणीं च दत्वा हिममन्दाकिनीतपनेन्दुकुमुदपुण्डरीककम्बुमुक्ताक्षीरादिसकलशुभ्रद्रव्यांशं-मिलयित्वा विधात्रा लिखिते इन्दीवरलते इव तस्याः नयनयुगलं विरराज वा । नासिकापि सुवर्णकेतकीव हररिपुहेमदण्ड इव शृङ्गाररस-लतायां रतिक्रीडाफलमिव शोभते । एवं कन्याधरोऽपि अरुणपल्लवाति-शयरसत्वं, विपुलपुलकितामृतसरित्बुद्बुदलावण्यपङ्केरुहरेखावलित्वं, विकसितसुरतरुमधुरकोमलकमयकान्तिं, बंधूकदाडीम कुसुमद्युतिं, उदयमार्त्तण्डमण्डलार्द्धत्वं, अनङ्गवक्षस्यरुणकुसुममालाशोभां च निर्जित्य पारिजातवालेन्दुशोभां सृजति । शुकचञ्चूप्रवालयोः कठिनत्वात्, तरुणा-रुणस्योष्णत्वात्, सन्ध्याभ्रस्याचिरत्वात्, रक्तोत्पलस्य जलाश्रयत्वात्, इन्दुकलायाः शीतलत्वात्, पारिजातस्यातीवारुणत्वात् एकैकशः उपमानबाह्यत्वात् विधात्रा सामग्र्येण विधिना इन्द्रगोपवध्वाः अङ्गरागं, बन्धूकपारिभद्रकोकनदपारिजातानां कोमलारक्तस्निग्धत्वं, प्रवालस्य मसृणत्वं, अग्नेः कान्तिं, ओषधीनां सत्तां, कल्पलतायाः प्रसन्नतां आहृत्य चन्द्रेन्द्रमणौ मिश्रणात् तस्या अधरो निर्मितो वा । तस्याः सरलमृदुल-स्निग्धकोमलकमनीयगम्भीरललितोदात्तप्रसन्नः स्वरोऽपि कन्दर्पदलनमन्त्र इव मुनीमानसमुच्चाटयन् आनन्दरङ्गसागरे क्रीडानदीसङ्गमध्वनिमनु-कुर्वाणः पुष्पधन्वनः मोहनवीणाध्वनिरिव, लावण्यजलधिमन्द्रगर्जनमिव रतिप्रदीपं सन्दीपयन् नूतनमदनसृष्टिं सर्जयन् मन्मथदग्धजगत् संजीवयन्

त्रिभुवनवादिनः मन्मथस्य जयशङ्खनाद इव रतिरसनाध्वनिरुन्मत्तकाम-दुन्दुभिरिव च निखिलं मोहयत्येव । कम्बुस्वनस्य नादातिशय्यात्, सारिकागानस्यानुदात्तत्वात्, झिङ्कारीषट्पदानां चतुरत्वात्, कोकिलस्वरस्य मधुमासिभवत्वात्, वंशीनादस्य गाम्भीर्य्याभावात् तान् परिहृत्य विधात्रा सरस्वत्याः सूक्ष्मत्वं, वीणायाः प्रान्तध्वनिं, भ्रमरस्य मध्यमस्वरं झिङ्कारस्य माधुर्य्यं, शङ्खस्य गाम्भीर्य्यं दुन्दुभेः कोमलत्वं एकीकृत्य तस्याः वचनं सृष्टमिव । डालिम्बबीजं आर्द्रतास्निग्धतावर्त्तुलतया निर्जित्य तस्याः दन्तपंक्तिरपि कन्दर्पस्य करारुणप्रतिबिम्बस्फटिकमालेव शोभते जन्तूनां मोहाय ईषत्हासेन मन्मथहस्तिनः मुक्ताशोभामनुकृत्येव ।

× × × × ×

एतावता कन्याकायनिर्माणकलावैचित्र्याकर्ण्णनेनाकुलितान्तः-करणस्य तस्य कुवलयपरिपालकस्य चेतसि किञ्चित्काठिन्यं वितर्क्य अकस्मात् आपदः शङ्कमानौ कथकौ तौ स्त्रीपुरुषौ पश्यतां सर्वेषां राज-सभायाः सहसा तिरोदधाते येन विस्मयक्षोभतप्तोऽसौ नरपतिरपत्यपरि-णयविषये मनोनुकूलललनासन्देशस्य अलाभात् निरुत्साहः संजातः । प्रयातेषु सभासत्सु कथञ्चिदन्तः पुरमागतस्य तस्य राज्ञा प्रबोधितस्यापि अक्ष्णोरेव प्रभाता रजनी । अथ दिवागममाशंसन्त्या पक्षिकाकल्या दिशो नादिताः । कुक्कुटाः मङ्गलमुहूर्त्तं दिव्यछन्दसा सूर्य्यागमनं च प्रचारया-मासुः । प्राचीगगनात् अन्धकारः क्रमशो दूरं यातः ज्ञानोत्पत्तौ विषय-वासनेव । वत्सतराणां हम्बारवाः, मातृक्रोडसुखरहितानां शिशूनां क्रन्दनरुतानि, विप्राणामुद्गीथगानानि च श्रुतानि मध्ये मध्ये । सहसा अरुणितपूर्वचक्रवालात् सवितृदेवे प्रकृतेःरक्तचन्दनविन्दुरिव दृष्टि मागते सति आलोकप्रसन्नासु दिक्षु आश्रमहोमाग्निधूमाः समुत्थिताः लोकाश्च

प्रबोधमाजग्मुः सुखेन, नववधूनां रमणान्, चौरान्, चञ्चलीभूता अभसारिकाश्च विहाय। शिवालयात् निरवच्छिन्नमागतं घण्टाध्वनिमाकर्ण्य शयनादुत्थितः स राजा कथमपि निवृत्तप्रातःकृत्यः सभां आगतवान्। अथ तत्रापि चिन्तया क्षणादधोमुखीभूते भूपतौ भयाद्विमूढायां च सभायां दूतेन सन्देशो निवेदितो तत् श्रीपुरुषोत्तमक्षेत्रात् साक्षात् मर्त्य-वैकुण्ठात् जह्नुमार्कण्डेयभृग्वङ्गीरसामपि तपःसाधनस्थलात्, यत्र नीलाद्रौ नीलमाधवस्यादर्शनात् खिन्नमनसः भक्तेन्द्रद्युम्नस्य मनःप्रसाद-साधनव्याजेन प्रकृत्यापुण्यपराङ्मुखानामतः पापाचरणेरतानां त्रितापतप्तानां सुलभमुक्तिलाभार्थमेव स्वयं वैकुण्ठनाथः चतुर्द्धादारुब्रह्माकारं परिगृह्य श्रीभूदेवीभ्यां सहात्मानं प्रदर्शयन् महामहिम्ना विराजमानः, कश्चिदवनिसुरः अखण्डभारतमण्डलस्याधीश्वरेण महामेघवाहनोपाधि-विभूषितेन ऐरवंशकुमुदवनप्रबोधनपूर्णचन्द्रोदयेन खारवेलाभिधानेन कलिङ्गाधिपतिना संप्रेषितः द्वारि वर्त्तते शारीरेण तेजसा निर्जितमपि मां दुर्लभदर्शानदानेनानुग्रहीतुमिव।

पुराणप्रसिद्धपुरुषोत्तमक्षेत्रनामश्रवणात् झटितिपुलकितविग्रहस्य हरिभक्तिपरायणस्य तस्य महीपालस्य मनश्चक्षुषि आसुवर्णरेखायाः महेन्द्रगिरिं यावत् विस्तीर्णस्य महोदधितरङ्गजलक्षालितचरणस्य, अन्तराले तुङ्गमेघासनगन्धमादनादिगिरिकुलशोभितस्य, रोधसि सुवर्णलेखाकारेण-दर्शयन्तीसुवर्णरेखा-विविधानां इन्दीवरकोकनदसितपद्मानां प्ररोहेण विचित्रिता चित्रोत्पला-ब्राह्मणानां पालयित्री ब्राह्मणी-यमद्वारनदीसन्ताप-हारिणी वैतरणी-ऋषिकुलसेविता ऋषिकुल्या-घनवनान्तवंशकुञ्जसमुद्भवा-वंशधारा-इन्द्रविभूतिमभ्यर्पयन्ती इन्द्रावत्यादिस्रोतस्वतीनां च पुण्यतोये-

नातिस्निग्धगात्रस्य, हीरकसीसकजम्बुनदादिधातुपूरितगर्भस्य, एकाम्रादिपुण्यकाननमञ्जुलस्य, शङ्खनाभौदारुभूत शङ्खायुधवासविवर्द्धितपुण्यप्रभस्य, विशालोत्कलखण्डस्य श्यामले चित्रे विमलीभूते सति, अञ्जसा मन्त्रिभिः भवनान्तरानीतस्य अर्घ्यादिभिः विहिततर्पणस्यागन्तुकस्याशीर्वचनेन, तृप्तिः हृदये संजाता इव परिलक्षिता लक्षणैः मुखमण्डलस्य । अनन्तरं सैंहिकेयग्रासविषादमुक्तविवस्वानिव शनैः विवर्द्धितमुखप्रभाविमण्डितः स राजापिवदनप्रसन्नतया अकालमेघावरणात् बलात् निर्भिन्नपूर्णचन्द्रमण्डलमपि तिरस्कृत्य, वचनशीतलतया कनखलकान्तारवाहिनीधवलाङ्गिनीजाह्नवीतरङ्गस्पर्शपपि लघूकृत्य विनयावनत्या, नैकषेयतनयदर्पापहरणवनद्रावणनगरीदहनगर्भितजनकजालोकनसम्वादमपि रामाग्रे विवक्षुं रामदूतमनुकुर्वाणः कर्पूरकुन्दकुमुदबान्धवधवलिमानमपि न्यक्कुर्वता मन्दस्मितेन महीसुरं प्रसादयन् सेवायां नियोगं याचितवान् । भगवन् । मध्याकाकाशमागत इदानीं प्रायेण भगवान् विवस्वान् विव्हलीभूतश्च प्राणीनिवहः तिग्मांशुभिः । आह्निककृत्यान्ते भोजनपीठेषु सर्वानपि सज्जनानिहास्थितान् द्रष्टुकामोऽहं भवदागमनगौरवात् । अत्रैव राजभवने भवतु विश्रामस्ते पथश्रमनिरसनाय । यथाकालं सवितुरस्तमनान्ते चन्द्रमयुखैरुज्ज्वलीभूतायां पृथीव्यां प्रासादपृष्ठे निभृतमावयोरालापो भवितुमर्हतीति । एवं वादिनि राजनि सर्वे ते सज्जानाः साधुवादं व्याहृत्य कार्य्यसम्पादनाय यथेष्टं ययुः मनसि निधाय स्वस्वधर्माधर्मसुखदुःखानि सात्विकाः शौचे रुचिं रजोधिकाः भोजनप्रवृत्तिं तामसाश्च शयनचिन्तामावहन्तः ।

शनैः सहस्रभानवः सूर्य्यस्य आत्मनि उपसंहृताः । विहङ्गमान् आश्रयपादपान्, ब्राह्मणान् यज्ञवेदिकां, योगिनो ध्यानस्थलीं, गोकुलं

भवनाभिमुखं, शिशून् मातृक्रोडं, रसिकान् रमणीप्रसङ्गम् , अभिसारिकाः संकेतस्थानं, गोपिकाः गोशालां, श्वापदान् वनपथेषु प्रेरयित्वा पश्चिमाकाशे अरुणोत्सवं विधाय पुण्यमयं सायन्तनं महीमागत्य विभावरीमपेक्षमाणा बभूव। क्रमशः पूर्वदिशः धूसरतमांसि धरणीं व्याप्य प्रसृतानि, नक्षत्राणि एकैकशः नभसि स्फुरितानि, कपिशं पश्चिमचक्रवालं निर्भिद्य उत्तस्थौ च भार्गवः स्वमहिमानं प्रदर्श्य यावच्चन्द्रोदयं यथा राजागमनं शङ्कमानः रक्षिणां नायकः, मन्थरं गाढान्धकारं गिरिशिखरादवतीर्य्य वृक्षचूडाः स्पर्शं स्पर्शं ग्रामोपान्तं यावत् प्रविष्टमालोक्य विहायसि राज रजतमयशुभ्रांशुः विद्रोहिणां प्रशासनाय गमनोद्यतः महाबली कश्चित् चक्रवर्त्तीव। इत्यवसरे राजानमन्तिकमासाद्य कालिङ्गः सोऽवनिपुर इत्थं जगाद— राजन्। मानवोचेष्टा व्यर्थमङ्गसंचालनमिव। फलसिद्धिस्तु दैवायत्ता। भारतविजयी कलिङ्गेश्वरः खारवेलः एकदा कंचित् राजानं विजित्य तत्कन्यकामपरूपामालोक्य स्वपुत्राय आनीतवान् यथामान यथास्नेहं। परन्तु तस्यामेव रजन्यां महिष्या स्वप्नमालोकितं यत् साक्षात् पार्वती सहचन्द्रशेखरेण तामित्थमुक्तवती— सुलक्षणे। पतिस्ते सिन्धुनदीतीरे पृथ्वीतिलककटकस्य राजानं निरस्तीकृत्य तत्कन्यामानयति पुत्राय ते प्रदातुम। परन्तु नैवंकारं सम्भवति। मदंशजाता मोहिनीकन्या मद्विधानादेव तथा मानुषीं तनुंधारयन्ती मद्भक्तस्य रुद्रसुधानिधेः शिवशापान्महीमागतस्य भोगवासनाक्षयार्थं निमित्तीकृता एव। तावुभौ महीं भुक्त्वा वासनापूरणान्ते समये शिवलोकं गमिष्यमाणौ। अतः लोभं परिहरन्ती सती समागते राजनि मदाज्ञां ज्ञापयन्ती दूतमुखेन धर्मध्वजधरणीपतिं, नारायणचरणाश्रित्त रुद्रसुधानिधेःपितरं कन्यान्वेषणपरायणं परन्तु निरस्तं सम्वाद प्रेरयित्वा तत्पुत्रमत्रानीय सकलतीर्थमय-

बिन्दुसरोवरसन्निकर्षे एकाम्रकानने मद्विहारभूमौ परिणयं सम्पादय तयोरिति।" पार्वत्यंशजातायाः कन्यायाः रूपं वा किमु वर्णितव्यं भवत्पुरतः। उक्तमेवात्र प्रमाणं। अन्यथा कथं कन्यान्वेषणावगतिः पुत्राभिधानज्ञानं वा दूरेवसतां नः। चक्रवर्त्तिनः खारवेलस्य अनुरोधोऽयं भवन्त प्रति सफलीकर्त्तुमेव भगवतीवचनम। दक्षिणाहि रामेश्वराद् हिन्दूकुशगिरिसंकटान्तं यावद्भूमेः विजयी खलु वर्त्ततेऽसौ। अतस्तद्वाक्ये गुरुत्वमास्थाप्य कथमपि मनसि शङ्कामकृत्वा रुद्रसुधानिधेः परिणयार्थं सपत्नीकोऽस्मद्देशमायाहि मया सह कालक्षेपं व्यर्थमकृत्वा। निवेदितं च मया यथादिष्टं यथारुचिमाचरेति। कन्यायाः तैलचित्रमपि गृहाण पुत्राय।

अकस्मात् दृष्टिलाभे नेत्रहीनो यथा स्यात्, अपुत्रिको वा पुत्रमुखावलोकनात्, प्रोषितभर्तृकायोषिद्वा सहसापतेरागमनेन, तथैव विमूढवाक् प्रसन्नान्तःकरणः वपुःपुलकैः मनोगतं ज्ञापयित्वा प्रसादप्राबल्यात् इङ्गितैनैवानुमतिं प्रार्थयित्वा विप्रस्य, निशान्तमागत्य गृहीततैलचित्रायै महिष्यै निवेदितवृत्तान्तः पुनरागत्य पुरस्तात् त्रयोदशीप्रभाते पूर्वाफाल्गुनौ यामो वयं श्रीक्षेत्राय जगन्नाथदर्शनायेति प्रत्युवाच तं ब्राह्मणं स राजा, येन स हृष्टः निर्दिष्टदिनमेवापेक्षमाणः कालं निनाय तत्र शरीरेण मनसातु श्रीक्षेत्रवेलायामासीदेव।

चक्रवर्त्तिनो सम्बन्धित्वं अनायासमासादितमिति चिन्तया राज्ञः प्रमोदः भूयसानुदिनं विवर्द्धमाणः महिष्यास्तु पार्वतीदत्तकन्यापि वधूरूपेण सम्भवति भाग्येन नः इति चिन्तया आकुलितानि इन्द्रियाणि आनन्दा-

तिशय्यात्। रुद्रसुधानिधिस्तु प्राक्पुण्यसंस्कारप्रभावदेव संसारीवद् व्यवहरन्नपि मनसि अस्पृष्ट आसीदेव घटनापरम्परया। मोहिनीकन्याचिन्तामन्तरा स्मरन्नपि स प्रायशः समाहितो वर्त्तते स्म। तथापि असौ कन्या सैव गौरीसम्भूता मोहिनीकन्या न वा इत्यजानन्नपि पितुस्तोषणाय सर्वथा मौनमावहन् क्वचिदुत्साहमपि दर्शितवान् श्रीक्षेत्रदर्शनाय येन जननीजनकौ प्रीतौ संजातौ। इतरैरलक्षितोऽपिकाले योगबलेनागत्य चैत्र शुक्लत्रयोदश्यां श्वेतसरोवरतीरे तां कन्यां प्रत्यक्षमालोक्य तस्यास्तनौ शम्भुरिव मत्वा दर्शनदानेन तस्यै अमृतमणिमर्पितवान् चन्द्रशेखरोपमोऽसौ।

रक्षिभिरावृतास्ते जगन्नाथदेशव्रजनविचारेणवर्जितबहिराडम्बराः चित्रोत्पलायाः प्रसूतौ शवरीनारायणं संपूज्य भवानीपत्तनमतिक्रम्य अम्बापाणिशालवनं विस्मयेन दर्शं दर्शं श्वापदसंकुलरमणीयारण्यभूमिष्वपि उपवनेष्विव जलफलभोजनेन निवृत्तक्षुत्पिपासाः कून्याकूलकुधरेकपर्दिन्यैकृतसपर्य्याः कस्मिंश्चित् हिमप्रभाते शीतलचिल्किावातसुखस्पर्शेण नितरां प्रसेदुः। पुरस्तात् विस्तीर्णस्य महत्सरसः नीलास्तरणेषु वीचिभङ्गतरणिचलनमीननर्त्तनेषु नीडजानांविचित्रसमवायशोभां नयनाभ्यां पायं पायं सरलगठनानांमनोरमणामुक्तलपल्लीवालानां उदारप्रणयगीतं, गोपालबालानां वेणुभ्यःदिव्यतानं, महिषगलघण्टानां गुरुध्वनिं च श्रावं श्रावमन्ते कृतजगन्नाथविग्रहालोकनक्षेत्रपरिक्रमणाः समये कलिङ्गपतिना बहुमानात् निमन्त्रितास्ते एकाम्रे यथाकालं विवाहकर्म सम्पादितवन्तः। कामानन्दस्तु राजपरिवारं विश्वस्तं ज्ञात्वा समये कार्य्यं सम्पादनीयं इति विचिन्त्य निश्चिन्तमनसा यथेष्ट भ्रमन् पुनरागत्य रुद्रसुधानिधि सपरिवारं विवाहार्थं श्रीक्षेत्रं प्रयातं श्रुत्वा नितरां नैराश्यमनुभूतवान्

कन्याप्राप्तिविषये यतः तत्र साक्षात् मर्त्यवैकुण्ठे महाभैरवीविमलादेव्याः अवस्थानात् नहि इतरतन्त्रप्रयोगस्य साफल्यं विशेषतः दारुब्रह्मणः पुरस्तात्। तथापि भूताधिपं तत्र प्रेरयित्वा तन्मुखात् कुमारस्य विवाहं सम्पन्नं चक्रवर्त्तिनः महामेघवाहनस्य कन्यया सह श्रुत्वा कुमारं च स्वस्मृत्या प्रतिष्ठितं विदित्वा भयादन्यत्र पलायित्वा आत्मानं ररक्ष। समये लब्धदासदासीगजधेनुतुरङ्गमणिकाञ्चनास्ते काले कन्यया सह स्वदेशं प्रत्यागतवन्तः। रुद्रसुधानिधिस्तु अभिमतरमणीमासाद्य जन्मान्तस्मृत्या मोहिनीकन्यायाः अविकलां छविं तस्यां निपीय प्रियाप्रणयनिष्णात, सागरान्तां महीं चिरेणोपभुज्य काले काञ्चिनगिरौ अवधूतं आत्मोपदेशेन अनुगृह्य प्रारब्धक्षयान्ते अन्ते श्रीक्षेत्रे निर्मम वसन् समये विष्णो परमपदमासवानिति। शम्॥

एवं पदान्यरमणानि निगद्य सद्यः
नारायणेन नरसिंहरथात्मजेन
शेषीकृता कथनसाध्ववधूतवार्त्ता
नारायणी कपिकरेषु शिला यथा स्यात् ।१।
तत्शोधयन्तु सुधियः समुदारबुध्या
काव्यश्रमे रुधिरशोषणमेव सारम्
विशेषतस्तुसुरवागनुसारकानां
हर्षे गते प्रभवतः किमु दण्डिवाणौ ।२।
नारायणानन्दकृतं गरीयः
गम्भीरतन्त्राचरणप्रतिष्ठम्
गद्यं न पूर्णं कृपया गुरुणां
गिराल्पयेत्थं गमितं प्रशान्तिम् ।३।